त्युक्थ्यः ॥ ५ ॥ ३२ ॥ तयोरिदवसा वयं सनेम नि च धीमहि । स्यादुत प्र-
नम् ॥ ६ ॥ इन्द्रावरुण वामहं हुवे चित्राय राधसे । अस्मान्त्सु जिग्युषस्कृतम्
७॥ इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा । अस्मभ्यं शर्म यच्छतम् ॥ ८ ॥ प्र
मश्नोतु सुष्टुतिरिन्द्रावरुण यां हुवे । यामृधाथे सधस्तुतिम् ॥ ६ ॥ ३३ ॥ ४ ॥

॥ १८ ॥ १-६ मेधातिथिः काण्व ऋषिः ॥ देवता-१-३ ब्रह्मणस्पतिः ।
ब्रह्मणस्पतिरिन्द्रश्च सोमश्च । ५ बृहस्पतिदक्षिणे । ६—८ सदसस्पतिः । ६
सस्पतिर्नाराशंसो वा ॥ छन्दः—१ विराड् गायत्री । ३, ६, ८ पिपीलि-
मध्या निचृद्गायत्री । ४ निचृद्गायत्री । ५ पादनिचृद्गायत्री । २, ७, ६ गायत्री ॥
जः स्वरः ॥

॥ १८ ॥ सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥१॥
रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः ॥ २॥ मा नः
मो अररुषो धूर्तिः प्रणङ् मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ ३ ॥ स घा वीरो
रिष्यति यमिन्द्रो ब्रह्मणस्पतिः । सोमो हिनोति मर्त्यम् ॥ ४ ॥ त्वं तं ब्रह्मणस्पते
म इन्द्रश्च मर्त्यम् । दक्षिणा पात्वंहसः ॥ ५ ॥ ३४ ॥ सदसस्पतिमद्भुतं प्रियमि-
स्य काम्यम् । सनिं मेधामयासिषम् ॥ ६ ॥ यस्मादृते न सिध्यति यज्ञो विपश्चि-
त्न । स धीनां योगमिन्वति ॥ ७॥ आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् ।
त्रा देवेषु गच्छति ॥ ८ ॥ नराशंसं सुधृष्टममपश्यं सप्रथस्तमम् । दिवो न स-
खसम् ॥ ६ ॥ ३५ ॥

॥ १६ ॥ १—६ मेधातिथिः काण्व ऋषिः ॥ देवता—अग्निर्मरुतश्च ॥
न्दः—२ निचृद्गायत्री । ६ पिपीलिकामध्या निचृद्गायत्री । १, ३—८ गायत्री ॥
ड्जः स्वरः ॥

॥ १६ ॥ प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे । मरुद्भिरग्न आ गहि
१ ॥ नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आ गहि ॥ २ ॥ ये महो
सो विदुर्विश्वे देवासो अद्रुहः । मरुद्भिरग्न आ गहि ॥ ३ ॥ य उग्रा अर्कमा-
वुरनाधृष्टास ओजसा । मरुद्भिरग्न आ गहि ॥ ४ ॥ ये शुभ्रा घोरवर्पसः सु-
त्रासो रिशादसः । मरुद्भिरग्न आ गहि ॥ ५ ॥ ३६ ॥ ये नाकस्याधि रोचने
वि देवास आसते । मरुद्भिरग्न आ गहि ॥ ६ ॥ य ईङ्खयन्ति पर्वतान् तिरः स-
द्रमर्णवम् । मरुद्भिरग्न आ गहि ॥७॥ आ ये तन्वन्ति रश्मिभिस्तिरः समुद्रमोजसा ।

मरुद्भिरग्न आ गहि ॥ ८ ॥ अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भि
आ गहि ॥ ९ ॥ ३७ ॥ १ ॥

॥ २० ॥ १-८ मेधातिथिः काण्व ऋषिः ॥ देवता-ऋभवः ॥ छन्द
विराड् गायत्री । ४ निचृद्गायत्री । ५, ८ पिपीलिकामध्या निचृद्गायत्री । १
६, ७ गायत्री ॥ षड्जः स्वरः ॥

॥ २० ॥ अयं देवाय जन्मने स्तोमो विप्रेभिरासया । अकारि रत्नध
॥ १ ॥ य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी । शमीभिर्यज्ञमाशत ॥ २ ॥
नासत्याभ्यां परिज्मानं सुखं रथम् । तक्षन्धेनुं सबर्दुघाम् ॥ ३ ॥ युवाना पि
पुनः सत्यमन्त्रा ऋजूयवः । ऋभवो विष्ट्यक्रत ॥ ४ ॥ सं वो मदासो अग्मते
च मरुत्वता । आदित्येभिश्च राजभिः ॥ ५ ॥ १ ॥ उत त्यं चमसं नवं त्व
वस्य निष्कृतम् । अकर्त चतुरः पुनः ॥ ६ ॥ ते नो रत्नानि धत्तन त्रिरा सा
सुन्वते । एकमेकं सुशस्तिभिः ॥ ७ ॥ अधारयन्त वह्नयोऽभजन्त सुकृत्यया ।
देवेषु यज्ञियम् ॥ ८ ॥ २ ॥

॥ २१ ॥ १-६ मेधातिथिः काण्व ऋषिः ॥ देवते-इन्द्राग्नी ॥ छन्दः-२
लिकामध्या निचृद्गायत्री । ५ निचृद्गायत्री । १, ३, ४, ६ गायत्री ॥ षड्जः स्व

॥ २१ ॥ इहेन्द्राग्नी उप ह्वये तयोरित्स्तोममुश्मसि । ता सोमं सोमपातमा
ता यज्ञेषु प्र शंसतेन्द्राग्नी शुम्भता नरः । ता गायत्रेषु गायत ॥ २ ॥ ता मि
प्रशस्तय इन्द्राग्नी ता हवामहे । सोमपा सोमपीतये ॥ ३ ॥ उग्रा सन्ता हवाम
पेदं सवनं सुतम् । इन्द्राग्नी एह गच्छताम् ॥ ४ ॥ ता महान्ता सदस्पती इन्द्राग्नी
उब्जतम् । अप्रजाः सन्त्वत्रिणः ॥ ५ ॥ तेन सत्येन जागृतमधि प्रचेतुने पदे । इन
शर्म यच्छतम् ॥ ६ ॥ ३ ॥

॥ २२ ॥ १-२१ मेधातिथिः काण्व ऋषिः ॥ देवता—१-४ अश्वि
५-८ सविता । ९, १० अग्निः । ११ देव्यः । १२ इन्द्राणीवरुणान्यग्ना
१३, १४ द्यावापृथिव्यौ । १५ पृथिवी । १६ विष्णुर्देवो वा । १७-२१ विष्
छन्दः—१-३, ८, १२, १७, १८ पिपीलिकामध्या निचृद्गायत्री । ६, १९
चृद्गायत्री । १५ विराड् गायत्री । ४, ५, ७, ९—११, १३, १४, १६,
२१ गायत्री ॥ षड्जः स्वरः ॥

॥ २२ ॥ प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये
१ ॥ या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे ॥ २ ॥
वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ॥ ३ ॥ नहि वाम-
दूरके यत्रा रथेन गच्छथः । अश्विना सोमिनो गृहम् ॥ ४ ॥ हिरण्यपाणि-
ये सवितारमुप ह्वये । स चेत्ता देवता पदम् ॥ ५ ॥ ४ ॥ अपां नपातमवसे स-
ारमुप स्तुहि । तस्य व्रतान्युश्मसि ॥ ६ ॥ विभक्तारं हवामहे वसोश्चित्रस्य
सः । सवितारं नृचक्षसम् ॥ ७ ॥ सखाय आ नि षीदत सविता स्तोम्यो नु
। दाता राधांसि शुम्भति ॥ ८ ॥ अग्ने पत्नीरिहा वह देवानामुशतीरुप ।
ारं सोमपीतये ॥ ९ ॥ आ ग्ना अग्न इहावसे होत्रां यविष्ठ भारतीम् । वरूत्रीं
णां वह ॥ १० ॥ ५ ॥ अभि नो देवीरवसा महः शर्मणा नृपत्नीः । अच्छिन्न-
त्राः सचन्ताम् ॥ ११ ॥ इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सो-
तये ॥ १२ ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरी-
ः ॥ १३ ॥ तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः । गन्धर्वस्य ध्रुवे पदे
४ ॥ स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥ १५ ॥ ६ ॥
देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्त धामभिः ॥ १६ ॥
विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे ॥ १७ ॥ त्रीणि पदा
चक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ १८ ॥ विष्णोः कर्मा-
पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ १९ ॥ तद्विष्णोः परमं
सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ २० ॥ तद्विप्रासो विपन्यवो जा-
सः समिन्धते । विष्णोर्यत्परमं पदम् ॥ २१ ॥ ७ ॥

॥ २३ ॥ १—२४ मेधातिथिः काण्व ऋषिः ॥ देवता–१ वायुः । २, ३
ायू । ४–६ मित्रावरुणौ । ७–९ इन्द्रो मरुत्वान् । १०–१२ विश्वे देवाः ।
–१५ पूषा । १६—२२ आपः । २३–२४ अग्निः ॥ छन्दः—१—१८
त्री । १९ पुरउष्णिक् । २० अनुष्टुप् । २१ प्रतिष्ठा । २२–२४ अनुष्टुप् ॥
—१–१८, २१ षड्जः । १९ ऋषभः । २०, २२—२४ गान्धारः ॥

॥ २३ ॥ तीव्राः सोमास आ गह्याशीर्वन्तः सुता इमे । वायो तान्प्रस्थिता-
॥ १ ॥ उभा देवा दिविस्पृशेन्द्रवायू हवामहे । अस्य सोमस्य पीतये ॥ २ ॥
वायू मनोजुवा विप्रा हवन्त ऊतये । सहस्राक्षा धियस्पती ॥ ३ ॥ मित्रं वयं

हवामहे वरुणं सोमपीतये । जज्ञाना पूतदक्षसा ॥ ४ ॥ ऋतेन यावृतावृधा
ज्योतिषस्पती । ता मित्रावरुणा हुवे ॥ ५ ॥ ८ ॥ वरुणः प्राविता भुवा
विश्वाभिरूतिभिः । करतां नः सुराधसः ॥ ६ ॥ मरुत्वन्तं हवामह इन्द्रमा
पीतये । सजूर्गणेन तृम्पतु ॥ ७ ॥ इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः
श्वे मम श्रुता हवम् ॥ ८ ॥ हत वृत्रं सुदानव इन्द्रेण सहसा युजा । मा नो
ईशत ॥ ९ ॥ विश्वान्देवान्हवामहे मरुतः सोमपीतये । उग्रा हि पृश्निमातरः॥
९ ॥ जयतामिव तन्यतुर्मरुतामेति धृष्णुया । यच्छुभं याथना नरः ॥ ११ ॥
राद्विद्युतस्पर्यतो जाता अवन्तु नः । मरुतो मृळयन्तु नः ॥ १२ ॥ आ पूषञ्चि
र्हिषमाघृणे धरुणं दिवः । आजा नष्टं यथा पशुम् ॥ १३ ॥ पूषा राजानमाघृणिरप
गुहा हितम् । अविन्दच्चित्रबर्हिषम् ॥ १४ ॥ उतो स मह्यमिन्दुभिः षड्युक्ताँ अ
षिधत् । गोभिर्यवं न चर्कृषत् ॥ १५ ॥ १० ॥ अम्बयो यन्त्यध्वभिर्जामयो
रीयताम् । पृञ्चतीर्मधुना पयः ॥ १६ ॥ अमूर्या उप सूर्ये याभिर्वा सूर्यः सह
नो हिन्वन्त्वध्वरम् ॥ १७ ॥ अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः । सिन्ध
कर्त्वं हविः ॥ १८ ॥ अप्स्व१न्तरमृतमप्सु भेषजमपामुत प्रशस्तये । देवा भव
जिनः ॥ १९ ॥ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च वि
शम्भुवमापश्च विश्वभेषजीः ॥ २० ॥ ११ ॥ आपः पृणीत भेषजं वरूथं तन्वे३
ज्योक् च सूर्यं दृशे ॥ २१ ॥ इदमापः प्र वहत यत्किं च दुरितं मयि । यद्वा
भिदुद्रोह यद्वा शेप उतानृतम् ॥ २२ ॥ आपो अद्यान्वचारिषं रसेन समगस
पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥ २३ ॥ सं माग्ने वर्चसा सृ
प्रजया समायुषा । विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः ॥ २४ ॥ १२

॥ २४ ॥ १-१५ शुनःशेप आजीगर्तिः कृत्रिमो वैश्वामित्रो देवरात ऋ
देवता—१ प्रजापतिः । २ अग्निः । ३-५ सविता भगो वा । ६-१५ वरु
छन्दः—१, २, ६-१५ त्रिष्टुप् । ३-५ गायत्री ॥ स्वरः—१, २, ६-१५
३-५ षड्जः ॥

॥ २४ ॥ कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम । को
मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥ १ ॥ अग्नेर्वयं प्रथमस्यामृ
मनामहे चारु देवस्य नाम । स नो मह्या अदितये पुनर्दात्पितरं च दृशेयं
च ॥ २ ॥ अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन्भागमीमहे ॥

श्चिद्धि ते इत्था भर्गः शशमानः पुरा निदः । अद्वेषो हस्तयोर्दधे ॥ ४ ॥ भर्ग-
ऋस्य ते वयमुदशेम तवावसा । मूर्धानं राय आरभे ॥ ५ ॥ १३ ॥ नहि ते
त्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः । नेमा आपो अनिमिषं चर-
र्नि ये वातस्य प्रमिनन्त्यभ्वम् ॥ ६ ॥ अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं
ते पूतदक्षः । नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः
७ ॥ उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रति-
तवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ ८ ॥ शतं ते राजन्भिषजः सहस्रमुर्वी
भीरा सुमतिष्टे अस्तु । बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्य-
त् ॥ ९ ॥ अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः । अद-
यानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ १० ॥ १४ ॥ तत्त्वा या-
ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः । अहेळमानो वरुणेह बो-
रुशंस मा न आयुः प्र मोषीः ॥ ११ ॥ तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं के-
हृद आ वि चष्टे । शुनःशेपो यमह्वद्गृभीतः सो अस्मान्राजा वरुणो मुमोक्तु
१२ ॥ शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः । अवैनं राजा वरुणः
सृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥ १३ ॥ अव ते हेळो वरुण नमो-
रव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः
तानि ॥ १४ ॥ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय । अथा
यमादित्य व्रते तवानागसो अदितये स्याम ॥ १५ ॥ १५ ॥

॥ २५ ॥ १–२१ शुनः शेप आजीगर्तिर्ऋषिः ॥ वरुणो देवता ॥ गा-
त्री छन्दः ॥ षड्जः स्वरः ॥

॥ २५ ॥ यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि
१ ॥ मा नो वधाय हत्नवे जिहीळानस्य रीरधः । मा हृणानस्य मन्यवे ॥ २ ॥ वि
ळीकाय ते मनो रथीरश्वं न सन्दितम् । गीर्भिर्वरुण सीमहि ॥ ३ ॥ परा हि मे
मन्यवः पतन्ति वस्यइष्टये । वयो न वसतीरुप ॥ ४ ॥ कदा क्षत्रश्रियं नरमा वरुणं
रामहे । मृळीकायोरुचक्षसम् ॥ ५ ॥ १६ ॥ तदित्समानमाशाते वेनन्ता न प्र युः-
च्छतः । धृतव्रताय दाशुषे ॥ ६ ॥ वेदा यो वीनां पदमन्तरिक्षेण पतताम् । वेद नावः
मुद्रियः ॥ ७ ॥ वेद मासो धृतव्रतो द्वादश प्रजावतः । वेदा य उपजायते ॥ ८ ॥ वेद
तस्य वर्तनिमुरोर्ऋष्वस्य बृहतः । वेदा ये अध्यासते ॥ ९ ॥ नि षसाद धृतव्रतो वरुणः

पुस्त्या३ स्वा । साम्रा॑ज्याय सुक्रतुः ॥ १० ॥ १७ ॥ अतो विश्वान्यद्भुता
कि॒त्वाँ अ॒भि प॑श्यति । कृतानि॒ या च॒ कर्त्वा॑ ॥ ११ ॥ स नो॑ वि॒श्वाहा॑ सु
रादि॒त्यः सु॒पथा॑ करत् । प्र ण॒ आयूं॑षि तारिषत् ॥ १२ ॥ बिभ्र॑द्द्रा॒पिं हि॒र
वरु॑णो वस्त नि॒र्णिज॑म् । परि॒ स्पशो॒ नि षे॑दिरे ॥ १३ ॥ न यं दिप्स॑न्ति दि॒प्
न द्रुह्वा॑णो॒ जना॑नाम् । न दे॒वम॒भिमा॑तयः ॥ १४ ॥ उ॒त यो मानु॑षे॒ष्वा यश॑श्च॒क्रे
साम्या । अ॒स्माक॑मु॒दरे॒ष्वा ॥ १५ ॥ १८ ॥ परा॑ मे यन्ति धी॒तयो॒ गावो॑ न ग
ती॒रनु॑ । इ॒च्छन्ती॑रुरु॒चक्ष॑सम् ॥ १६ ॥ सं नु वो॑चावहै॒ पुन॒र्यतो॑ मे॒ मध्वाभृ॑तम् ।
तेव॒ क्षद॑से प्रि॒यम् ॥ १७ ॥ दर्शं॒ नु वि॒श्वद॑र्शतं॒ दर्शं॒ रथ॒मधि॒ क्षमि॑ । ए॒ता ज
मे॒ गिरः॑ ॥ १८ ॥ इ॒मं मे॑ वरुण श्रुधी॒ हव॑म॒द्या च॑ मृळय । त्वाम॑व॒स्युरा च॑के ॥१
त्वं विश्व॑स्य मेधिर दि॒वश्च॒ ग्मश्च॑ राजसि । स याम॑नि॒ प्रति॑ श्रुधि ॥२०॥ उदु
मु॑मुग्धि नो॒ वि पाशं॒ मध्य॒मं चृ॑त । अवा॑ध॒मानि॑ जी॒वसे॑ ॥२१॥ १९॥

॥ २६ ॥ १–१० शुनःशेप आजीगर्तिर्ऋषिः ॥ अग्निर्देवता ॥ छन्दः–
८, ९ आर्ची उष्णिक् । २, ६, निचृद्गायत्री । ३ प्रतिष्ठा गायत्री । ४, १०
यत्री । ५, ७ विराड् गायत्री । स्वरः—१, ८, ९ ऋषभः २, ६, ३, ४,
५, ७ षड्जः ॥

॥ २६ ॥ वसि॑ष्वा॒ हि मि॑येध्य॒ वस्त्रा॑ण्यूर्जां पते । सेमं नो॑ अध्व॒रं य॑ज ॥ १
नि नो॒ होता॒ वरे॑ण्यः॒ सदा॑ यविष्ठ॒ मन्म॑भिः । अग्ने॑ दि॒वित्म॑ता॒ वचः॑ ॥ २ ॥
हि ष्मा॑ सूनवे॑ पि॒तापिर्य॑ज॒त्याप॒ये॑ । सखा॑ स॒ख्ये॑ वरे॑ण्यः ॥ ३ ॥ आ नो॑ ब
रि॒शाद॑सो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा । सीद॑न्तु॒ मनु॑षो यथा ॥ ४ ॥ पूर्व्य॑ होतर॒स्य
मन्द॑स्व स॒ख्यस्य॑ च । इ॒मा उ॒ षु श्रु॑धी॒ गिरः॑ ॥ ५ ॥ २० ॥ यच्चि॒द्धि शश्
तना॑ दे॒वन्दे॑वं॒ यजा॑महे । त्वे इद्धू॑यते ह॒विः ॥ ६ ॥ प्रि॒यो नो॑ अस्तु वि॒श्पति॒र्हो
म॒न्द्रो वरे॑ण्यः । प्रि॒याः स्व॒ग्नयो॑ व॒यम् ॥ ७ ॥ स्व॒ग्नयो॒ हि वार्यं॑ दे॒वासो॑ दधि॒रे
नः । स्व॒ग्नयो॑ मनामहे ॥ ८ ॥ अथा॑ न उ॒भये॑षा॒ममृ॑त॒ मर्त्या॑नाम् । मि॒थः स॑न्तु
शस्तयः ॥ ९ ॥ विश्वे॑भिरग्ने अ॒ग्निभि॑रि॒मं य॒ज्ञमि॒दं वचः॑ । चनो॑ धाः सह
यहो ॥ १० ॥ २१ ॥

॥ २७ ॥ १–१३ शुनःशेप आजीगर्तिर्ऋषिः ॥ देवता–१–१२ अग्नि
१३ विश्वे देवाः ॥ छन्दः—१–१२ गायत्री । १३ त्रिष्टुप् ॥ स्वरः—१–
षड्जः १३ धैवतः ॥

॥ २७ ॥ अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः । सम्राजन्तम-
राणाम् ॥ १ ॥ स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः । मीढ्वाँ अस्माकं ब-
ात् ॥ २ ॥ स नो दूराच्चासाच्च नि मर्त्यादघायोः । पाहि सदमिद्विश्वायुः ॥३॥
मू षु त्वमस्माकं सनिं गायत्रं नव्यांसम् । अग्ने देवेषु प्र वोचः ॥ ४ ॥ आ नो भज
मेष्वा वाजेषु मध्यमेषु । शिक्षा वस्वो अन्तमस्य ॥ ५ ॥ २२ ॥ विभक्तासि चि-
ानो सिन्धोरूर्मा उपाक आ । सद्यो दाशुषे क्षरसि ॥६॥ यमग्ने पृत्सु मर्त्यमवा वाजेषु
जुनाः । स यन्ता शश्वतीरिषः ॥७॥ नकिरस्य सहन्त्य पर्येता कयस्य चित् । वाजो अ-
श्रवाय्यः ॥८॥ स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनिता ॥९॥
ाबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीकम् ॥१०॥२३॥ स नो
ाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः । धिये वाजाय हिन्वतु ॥११॥ स रेवाँ इव विश्पति-
र्व्यः केतुः शृणोतु नः । उक्थैरग्निर्बृहद्भानुः ॥ १२ ॥ नमो महद्भ्यो नमो अ-
केभ्यो नमो युवभ्यो नम आशिनेभ्यः । यजाम देवान्यदि शक्नवाम मा ज्यायसः
समा वृक्षि देवाः ॥ १३ ॥ २४ ॥

॥ २८ ॥ १–९ शुनःशेप आजीगर्तिर्ऋषिः ॥ इन्द्रयज्ञसोमा देवताः ॥
न्दः–१–६ अनुष्टुप् । ७–९ गायत्री ॥ स्वरः–१–६ गान्धारः ७–९ षड्जः ॥

॥ २८ ॥ यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे । उलूखलसुतानामवेद्वि-
जल्गुलः ॥ १ ॥ यत्र द्वाविव जघनाधिषवण्या कृता । उलूखलसुतानामवेद्विन्द्र
ल्गुलः ॥ २ ॥ यत्र नार्यपच्यवमुपच्यवं च शिक्षते । उलूखलसुतानामवेद्विन्द्र
ल्गुलः ॥ ३ ॥ यत्र मन्थां विबध्नते रश्मीन्यमितवा इव । उलूखलसुतानामवे-
न्द्र जल्गुलः ॥ ४ ॥ यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद
यतामिव दुन्दुभिः ॥ ५ ॥ २५ ॥ उत स्म ते वनस्पते वातो वि वात्यग्रमित् ।
थो इन्द्राय पातवे सुनु सोममुलूखल ॥ ६ ॥ आयजी वाजसातमा ता ह्युच्चा
जर्भृतः । हरी इवान्धांसि बप्सता ॥ ७ ॥ ता नो अद्य वनस्पती ऋष्वावृष्वेभिः
तृभिः । इन्द्राय मधुमत्सुतम् ॥ ८ ॥ उच्छिष्टं चम्वोर्भर सोमं पवित्र आ सृज । नि
हि गोरधि त्वचि ॥ ९ ॥ २६ ॥

॥ २९ ॥ १—७ शुनःशेप आजीगर्तिर्ऋषिः ॥ इन्द्रो देवता ॥ पङ्क्ति-
छन्दः ॥ पञ्चमः स्वरः ॥

॥ २९ ॥ यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि । आ तू न इन्द्र शं-

सय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ १ ॥ शिप्रिन्वाजानां पते शचीवस
दंसना । आ तू नं इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ॥ २॥ नि ष
पया मिथूदृशा सस्तामबुध्यमाने। आ तू नं इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सह
तुवीमघ ॥ ३॥ ससन्तु त्या अरातयो बोधन्तु शूर रातयः। आ तू नं इन्द्र शं
गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ४ ॥ समिन्द्र गर्दभं मृण नुवन्तं पाप
मुया । आ तू नं इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ५
पताति कुण्डृणाच्या दूरं वातो वनादधि । आ तू नं इन्द्र शंसय गोष्वश्वेषु शुभ्रि
सहस्रेषु तुवीमघ ॥ ६ ॥ सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम् । आ तू नं इ
शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ७ ॥ २७॥

॥ ३० ॥ १—२२ शुनःशेप आजिगर्तिर्ऋषिः ॥ देवता—१-१६ इन्द्र
१७-१९ अश्विनौ । २०-२२ उषाः ॥ छन्दः—१-१०, १२-१५, १७-
गायत्री। ११ पादनिचृद्गायत्री। १६ त्रिष्टुप् ॥ स्वरः-१-२२ षड्जः १६ धैवतश्च

॥ ३० ॥ आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम् । मंहिष्ठं सिञ्च
न्दुभिः ॥ १ ॥ शतं वा यः शुचीनां सहस्रं वा समाशिराम् । एदु निम्नं न री
॥ २ ॥ सं यन्मदाय शुष्मिण एना ह्यस्योदरे । समुद्रो न व्यचो दधे ॥ ३ ॥
यमु ते समतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ॥ ४ ॥ स्तोत्रं राध
पते गिर्वाहो वीर यस्य ते । विभूतिरस्तु सूनृता ॥ ५ ॥ २८ ॥ ऊर्ध्वस्तिष्ठ
ऊतयेऽस्मिन्वाजे शतक्रतो । समन्येषु ब्रवावहै ॥ ६ ॥ योगेयोगे तवस्तरं व
वाजे हवामहे । सखाय इन्द्रमूतये॥ ७ ॥ आ घा गमद्यदि श्रवत्सहस्रिणीभिरू
भिः। वाजेभिरुप नो हवम् ॥ ८ ॥ अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् । यं ते
पिता हुवे ॥ ९ ॥ तं त्वा वयं विश्ववारा शास्महे पुरुहूत । सखे वसो ज
तृभ्यः ॥ १० ॥ २९ ॥ अस्माकं शिप्रिणीनां सोमपाः सोमपाव्नाम् । सखे व
न्त्सखीनाम् ॥ ११ ॥ तथा तदस्तु सोमपाः सखे वज्रिन्तथा कृणु । यथा त
श्मसीष्टये ॥ १२ ॥ रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो य
मदेम ॥ १३ ॥ आ घ त्वावान्त्मनाप्तः स्तोतृभ्यो धृष्णवियानः । ऋणोरक्षं
चक्र्योः ॥ १४ ॥ आ यद्दुवः शतक्रतवा कामं जरितॄणाम् । ऋणोरक्षं न श
भिः ॥ १५॥ ३० ॥ शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धना
स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् ॥ १६ ॥ आ

श्वावत्येषा यातं शवीरया । गोमदस्रा हिरण्यवत् ॥ १७ ॥ समानयोजनो
गं रथो दस्रावमर्त्यः । समुद्रे अश्विनेयते ॥ १८ ॥ न्यघ्न्यस्य मूर्धनि चक्रं
स्य येमथुः । परि द्यामन्यदीयते ॥ १९ ॥ कस्त उषः कधप्रिये भुजे मर्तो अ-
। कं नक्षसे विभावरि ॥ २० ॥ वयं हि ते अमन्मह्यान्तादा पराकात् । अश्वे
चित्रे अरुषि ॥ २१ ॥ त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः । अस्मे रयिं नि
य ॥ २२ ॥ ३१ ॥ ६ ॥

॥ ३१ ॥ १—१८ हिरण्यस्तूप आङ्गिरस ऋषिः ॥ अग्निर्देवता ॥
ः— १-७, ९-१५, १७ जगती । ८, १६, १८ त्रिष्टुप् ॥ स्वरः—१-७,
-१५, १७ निषादः । ८, १६, १८ धैवतः ॥

॥ ३१ ॥ त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ १ ॥ त्वमग्ने प्रथमो
रस्तमः कविर्देवानां परि भूषसि व्रतम् । विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता
ः कतिधा चिदायवे ॥ २ ॥ त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया
स्वते । अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ॥ ३ ॥ त्वमग्ने
धामवाशयः पुरूरवसे सुकृते सुकृत्तरः । श्वात्रेण यत्पित्रोर्मुच्यसे पर्या त्वा
नयन्नापरं पुनः ॥ ४ ॥ त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः ।
ाहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवासति ॥ ५ ॥ ३२ ॥ त्व-
वृजिनवर्तनिं नरं सक्मन्पिपर्षि विदथे विचर्षणे । यः शूरसाता परितक्म्ये
दभ्रेभिश्चित्समृता हंसि भूयसः ॥ ६ ॥ त्वं तमग्ने अमृतत्व उत्तमे मर्तं द-
श्रवसे दिवेदिवे । यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च
॥ ७ ॥ त्वं नो अग्ने सनये धनानां यशसं कारुं कृणुहि स्तवानः । ऋ-
कर्मापसा नवेन देवैर्द्यावापृथिवी प्रावतं नः ॥ ८ ॥ त्वं नो अग्ने पित्रोरु-
आ देवो देवेष्वनवद्य जागृविः । तनूकृद्बोधि प्रमतिश्च कारवे त्वं कल्याण वसु
मोपिषे ॥ ९ ॥ त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं वयस्कृत्तव जामयो वयम् । सं
ायः शतिनः सं सहस्रिणः सुवीरं यन्ति व्रतपामदाभ्य ॥ १० ॥ ३३ ॥ त्वामग्ने
मायुमायवे देवा अकृण्वन्नहुषस्य विश्पतिम् । इळामकृण्वन्मनुषस्य शासनीं
र्यत्पुत्रो ममकस्य जायते ॥ ११ ॥ त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष
श्च वन्द्य । त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाणस्तव व्रते ॥ १२ ॥

त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय चतुरक्ष इध्यसे । यो रातहव्योऽवृकाय
यसे कीरेश्चिन्मन्त्रं मनसा वनोषि तम् ॥ १३ ॥ त्वमग्न उरुशंसाय वाघते
यद्रेक्णः परमं वनोषि तत् । आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्
दिशो विदुष्टरः ॥ १४ ॥ त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूतं परि पासि वि
तः । स्वादुक्षद्मा यो वसतौ स्योनकृज्जीवयाजं यजते सोपमा दिवः ॥ १५ ॥ इ
इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् । आपिः पिता प्र
सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम् ॥ १६ ॥ मनुष्वदग्ने अङ्गिरस्वदङ्गिरो
यातिवत्सदने पूर्ववच्छुचे । अच्छ याह्या वहा दैव्यं जनमा सादय बर्हिषि
च प्रियम् ॥ १७ ॥ एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा
वा । उत प्र णेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या ॥१८॥

॥ ३२ ॥ १–१५ हिरण्यस्तूप आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ त्रि
छन्दः ॥ धैवतः स्वरः ॥

॥ ३२ ॥ इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।
हन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥ १ ॥ अहन्नहिं पर्वते शि
णं त्वष्टास्मै वज्रं स्वर्यं ततक्ष । वाश्रा इव धेनवः स्यन्दमाना अञ्जः समु
जग्मुरापः ॥ २ ॥ वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य । आ
कं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ॥ ३ ॥ यदिन्द्राहन्प्रथमजामही
न्मायिनाममिनाः प्रोत मायाः । आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न
विवित्से ॥ ४ ॥ अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन । स्कन्धा
कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः ॥ ५ ॥ ३६ ॥ अयोद्धेव
आ हि जुह्वे महावीरं तुविबाधमृजीषम् । नातारीदस्य समृतिं वधानां सं रुज
पिपिष इन्द्रशत्रुः ॥ ६ ॥ अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघ
वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥ ७ ॥ नदं न
ममुया शयानं मनो रुहाणा अति यन्त्यापः । याश्चिद्वृत्रो महिना पर्यतिष्ठत्
महिः पत्सुतः शीर्बभूव ॥ ८ ॥ नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव
भार । उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥ ९ ॥ अ
न्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् । वृत्रस्य निण्यं वि चर
पो दीर्घं तम आशयदिन्द्रशत्रुः ॥ १० ॥ ३७ ॥ दासपत्नीरहिगोपा अति

था आपः पणिनेव गावः। अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्व-
:॥ ११ ॥ अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः। अजयो
अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून् ॥ १२ ॥ नास्मै विद्युन्न तन्य-
सिषेध न यां मिहमकिरद्ध्रादुनिं च। इन्द्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो
वा वि जिग्ये ॥ १३ ॥ अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरग-
त्। नव च यन्नवतिं च स्रवन्तीः श्येनो न भीतो अतरो रजांसि ॥ १४ ॥
द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः। सेदु राजा क्षयति
णीनामरान्न नेमिः परि ता बभूव ॥ १५ ॥ ३८ ॥ २ ॥

॥ ३३ ॥ १—१५ हिरण्यस्तूप आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥
दः—१, २, ४, ८, ६, १२, १३ निचृत् त्रिष्टुप्। ३, ६, १० त्रिष्टुप्। ५,
११ विराट् त्रिष्टुप्। १४, १५ भुरिक् पङ्क्तिः ॥ स्वरः—१—१३ धैवतः।
, १५ पञ्चमः ॥

॥ ३३ ॥ एतायामोप गव्यन्त इन्द्रमस्माकं सु प्रमतिं वावृधाति। अनामृणः
वेदादस्य रायो गवां केतं परमावर्जते नः ॥ १ ॥ उपेदहं धनदामप्रतीतं जुष्टां
श्येनो वसतिं पतामि। इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन्
२ ॥ नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि। चोष्कूयमाण
भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥ ३ ॥ वधीर्हि दस्युं धनिनं घनेनँ ए-
रन्नुपशाकेभिरिन्द्र। धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः
४ ॥ परा चिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः। प्र यद्दिवो
वः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥ ५ ॥ १ ॥ अयुयुत्सन्ननवद्यस्य
ामयातयन्त क्षितयो नवग्वाः। वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चित-
आयन् ॥ ६ ॥ त्वमेतान्रुदतो जक्षतश्चायोधयो रजस इन्द्र पारे। अवादहो
आ दस्युमुच्चा प्र सुन्वतः स्तुवतः शंसमावः ॥ ७ ॥ चक्राणासः परीणहं पृ-
्या हिरण्येन मणिना शुम्भमानाः। न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो
धात्सूर्येण ॥ ८ ॥ परि यदिन्द्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीम्।
न्यमानाँ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र ॥ ६ ॥ न ये दिवः पृथि-
अन्तमापुर्न मायाभिर्धनदां पर्यभूवन्। युजं वज्रं वृषभश्चक्र इन्द्रो निर्ज्योतिषा
सो गा अदुक्षत् ॥ १० ॥ २ ॥ अनु स्वधामक्षरन्नापो अस्यावर्धत मध्य आ

नाव्यानाम् । सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन हन्मनाहन्नभि द्यून् ॥ ११
न्याविध्यदिलीबिशस्य दृळ्हा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः । यावत्तरो मघवन्य
दोजो वज्रेण शत्रुमवधीः पृतन्युम् ॥ १२ ॥ अभि सिध्मो अजिगादस्य शत्रू
तिग्मेन वृषभेणा पुरोऽभेत् । सं वज्रेणासृजद्वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छ
दानः ॥ १३ ॥ आवः कुत्समिन्द्र यस्मिञ्चाकन्प्रावो युध्यन्तं वृषभं दशद्यु
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥ १४ ॥ आवः शमं
तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् । ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रू
मधरा वेदनाकः ॥ १५ ॥ ३ ॥

॥ ३४ ॥ १-१२ हिरण्यस्तूप आङ्गिरस ऋषिः ॥ अश्विनौ देवते ॥
छन्दः—१, ६ विराड् जगती । २, ३, ७, ८ । निचृज्जगती ५, १०, ११
गती ४ । भुरिक् त्रिष्टुप् । १२ निचृत् त्रिष्टुप् । ९ भुरिक् पङ्क्तिः ॥ स्वरः—
५-८, १०, ११ निषादः ४, १२, ९ पञ्चमः ॥

॥ ३४ ॥ त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना
वोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ॥ १ ॥ त्रयः प
मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः । त्रयः स्कम्भासः स्कभितास आ
त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा ॥ २ ॥ समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं
धुना मिमिक्षतम् । त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्
॥ ३ ॥ त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम् । त्रिर्नान्द्यं वह
श्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् ॥४॥ त्रिर्नो रयिं वहतमश्विन
त्रिर्देवताता त्रिरुतावतं धियः । त्रिः सौभगत्वं त्रिरुत श्रवांसि नस्त्रिष्ठं वां सू
हितारुहद्रथम् ॥५॥ त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु
मद्भ्यः । ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती ॥ ६ ॥
त्रिर्नो अश्विना यजता दिवेदिवे परि त्रिधातु पृथिवीमशायतम् । तिस्रो नास
रथ्या परावत आत्मेव वातः स्वसराणि गच्छतम् ॥ ७ ॥ त्रिरश्विना सिन्धु
सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतम् । तिस्रः पृथिवीरुपरि प्रवा दिवो
रक्षेथे द्युभिरक्तुभिर्हितम् ॥ ८ ॥ क्व त्री चक्रा त्रिवृतो रथस्य क्व त्रयो वन्धु
सनीळाः । कदा योगो वाजिनो रासभस्य येन यज्ञं नासत्योपयाथः ॥ ९ ॥
नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः । युवोर्हि पूर्वं सवितो

मृताय चित्रं घृतवन्तमिष्यति ॥ १० ॥ आ नासत्या त्रिभिरेकादशैरिह देवेभि-
तं मधुपेयमश्विना । प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा
११ ॥ आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं वहतं सुवीरम् । शृण्वन्ता
मवसे जोहवीमि वृधे च नो भवतं वाजसातौ ॥ १२ ॥ ५ ॥

॥ ३५ ॥ १–११ हिरण्यस्तूप आङ्गिरस ऋषिः ॥ देवताः—१ अग्निर्मित्राव-
णौ रात्रिः सविता । २–११ सविता ॥ छन्दः—१ विराड् जगती । ९ निचृ-
गती । २, ५, १०, ११, विराट् त्रिष्टुप् ३, ४, ६ त्रिष्टुप् ७, ८ भुरिक् पङ्क्तिः ॥
रः—१, ९ निषादः । २, ५, १०, ११, ३, ४, ६ धैवतः ७, ८ पञ्चमः ॥

॥ ३५ ॥ ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणाविहावसे । ह्वयामि रात्रीं
तो निवेशनीं ह्वयामि देवं सवितारमूतये ॥ १ ॥ आ कृष्णेन रजसा वर्तमानो
वेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्
२ ॥ याति देवः प्रवता यात्युद्वता याति शुभ्राभ्यां यजतो हरिभ्याम् । आ देवो
ति सविता परावतोऽप विश्वा दुरिता बाधमानः ॥ ३ ॥ अभीवृतं कृशनैर्विश्वरूपं हि-
यशम्यं यजतो बृहन्तम् । आस्थाद्रथं सविता चित्रभानुः कृष्णा रजांसि तविषीं
ानः ॥ ४ ॥ वि जनाञ्छ्यावाः शितिपादो अख्यन्रथं हिरण्यप्रउगं वहन्तः ।
वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ॥ ५ ॥ तिस्रो द्यावः स-
तुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् । आणिं न रथ्यममृताधि तस्थुरिह
ीतु य उ तच्चिकेतत् ॥ ६ ॥ ६ ॥ वि सुपर्णो अन्तरिक्षाण्यख्यद्गभीरवेपा असुरः
नीथः । क्वे३दानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ॥ ७ ॥ अष्टौ व्य-
यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून् । हिरण्याक्षः सविता देव आ-
दधद्रत्ना दाशुषे वार्याणि ॥ ८ ॥ हिरण्यपाणिः सविता विचर्षणिरुभे द्यावा-
थिवी अन्तरीयते । अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति
९ ॥ हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ् । अपसेधन्र-
सो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥ १० ॥ ये ते पन्थाः सवितः पू-
सोऽरेणवः सुकृता अन्तरिक्षे । तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो
धि च ब्रूहि देव ॥ ११ ॥ ७ ॥ ७ ॥

॥ ३६ ॥ १–२० घोर ऋषिः १–२० अग्निर्देवता ॥ छन्दः—१, १२ भुरि-
ुष्टुप् । २ निचृत्सतः पङ्क्तिः ४ निचृत्पङ्क्तिः । १०, १४ निचृद्विष्टारपङ्क्तिः । १८

विष्टारपङ्क्तिः । २० सतः पङ्क्तिः । ३, ११ निचृत्पथ्या बृहती । ५, १६ निचृद्बृह
६ भुरिग् बृहती ७ बृहती । ८ स्वराड् बृहती । ९ निचृदुपरिष्टाद्बृहती ।
उपरिष्टाद्बृहती । १५ विराट् पथ्याबृहती । १७ विराडुपरिष्टाद्बृहती । १९ प
बृहती ॥ स्वरः—१, १२ गान्धारः । २, ४, १०, १४, १८, २० पञ्चमः
११, ५, १६, ६-९, १३, १५, १७, १९ मध्यमः ॥

॥ ३६ ॥ प्र वो यह्वं पुरूणां विशां देवयतीनाम् । अग्निं सूक्तेभिर्वचोभिर
यं सीमिदन्य ईळते ॥ १ ॥ जनासो अग्निं दधिरे सहोवृधं हविष्मन्तो विधेम ते । स
नो अद्य सुमना इहाविता भवा वाजेषु सन्त्य ॥ २ ॥ प्र त्वा दूतं वृणीमहे हो
विश्ववेदसं । महस्ते सतो वि चरन्त्यर्चयो दिवि स्पृशन्ति भानवः ॥ ३ ॥
सस्त्वा वरुणो मित्रो अर्यमा सं दूतं प्रत्नमिन्धते । विश्वं सो अग्ने जयति
धनं यस्ते ददाश मर्त्यः ॥ ४ ॥ मन्द्रो होता गृहपतिरग्ने दूतो विशामसि
विश्वा संगतानि व्रता ध्रुवा यानि देवा अकृण्वत ॥ ५ ॥ ८ ॥ त्वे इदग्ने
भगे यविष्ठ्य विश्वमा हूयते हविः । स त्वं नो अद्य सुमना उतापरं यक्षि
न्त्सुवीर्या ॥ ६ ॥ तं घेमित्था नमस्विन उप स्वराजमासते । होत्राभिरग्निं म
समिन्धते तितिर्वांसो अति स्रिधः ॥ ७ ॥ घ्नन्तो वृत्रमतरन्रोदसी अप उरु
याय चक्रिरे । भुवत्कण्वे वृषा द्युम्न्याहुतः क्रन्ददश्वो गविष्टिषु ॥ ८ ॥ सं
दस्व महाँ असि शोचस्व देववीतमः । वि धूममग्ने अरुषं मियेध्य सृज प्र
दर्शतम् ॥ ९ ॥ यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन । यं कण्व
ध्यातिथिर्धनस्पृतं यं वृषा यमुपस्तुतः ॥ १० ॥ ९ ॥ यमग्निं मेध्यातिथिः कण्व
ऋतादधि तस्य प्रेषो दीदियुस्तमिमा ऋचस्तमग्निं वर्धयामसि ॥ ११ ॥ रायस्
स्वधावोऽस्ति हि तेऽग्ने देवेष्वाप्यम् । त्वं वाजस्य श्रुत्यस्य राजसि स नो
महाँ असि ॥ १२ ॥ ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो
स्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ १३ ॥ ऊर्ध्वो नः पाह्यंहसो नि के
विश्वं समत्रिणं दह । कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥ १
पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः । पाहि रीषत उत वा जिघांसतो
द्भानो यविष्ठ्य ॥ १५ ॥ १० ॥ घनेव विष्वग्वि जह्यराव्णस्तपुर्जम्भ यो अ
ध्रुक् । यो मर्त्यः शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत ॥ १६ ॥ अग्नि
सुवीर्यमग्निः कण्वाय सौभगम् । अग्निः प्रावन्मित्रोत मेध्यातिथिमग्निः
उपस्तुतम् ॥ १७ ॥ अग्निना तुर्वशं यदुं परावत उग्रादेवं हवामहे । अग्निर्न

ास्त्वं बृहद्रथं तुर्वीतिं दस्यवे सहः ॥ १८ ॥ नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय
वते । दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥ १९ ॥ त्वेषासो
नेरमवन्तो अर्चयो भीमासो न प्रतीतये । रक्षस्विनः सदमिद्यातुमावतो विश्वं
ात्रिणं दह ॥ २० ॥ ११ ॥

॥ ३७ ॥ १-१५ कण्वो घौर ऋषिः ॥ मरुतो देवताः ॥ छन्दः--१, २, ४,
-८, १२ गायत्री । ३, ६, ११, १४ निचृद् गायत्री । ५ विराड् गायत्री । १०,
पिपीलिकामध्या निचृद्गायत्री १३ पादनिचृद्गायत्री ॥ षड्जः स्वरः ॥

॥ ३७ ॥ क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम् । कण्वा अभि प्र गायत
१ ॥ ये पृषतीभिर्ऋष्टिभिः साकं वाशीभिरञ्जिभिः । अजायन्त स्वभानवः
२ ॥ इहेव शृण्व एषां कशा हस्तेषु यद्वदान् । नि यामञ्चित्रमृञ्जते ॥ ३ ॥
वः शर्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे । देवत्तं ब्रह्म गायत ॥ ४ ॥ प्र शंसा
ष्वघ्न्यं क्रीळं यच्छर्धो मारुतम् । जम्भे रसस्य वावृधे ॥ ५ ॥ १२ ॥ को वो व-
ष्ठ आ नरो दिवश्च ग्मश्च धूतयः । यत्सीमन्तं न धूनुथ ॥ ६ ॥ नि वो या-
य मानुषो दध्र उग्राय मन्यवे । जिहीत पर्वतो गिरिः ॥ ७ ॥ येषामज्मेषु पृ-
वी जुजुर्वां इव विश्पतिः । भिया यामेषु रेजते ॥ ८ ॥ स्थिरं हि जानमेषां वयो
तुर्निरेतवे । यत्सीमनु द्विता शवः ॥ ९ ॥ उदु त्ये सूनवो गिरः काष्ठा अज्मे-
त्नत । वाश्रा अभिज्ञु यातवे ॥ १० ॥ १३ ॥ त्यं चिद्घा दीर्घं पृथुं मिहो न-
तममृध्रम् । प्र च्यावयन्ति यामभिः ॥ ११ ॥ मरुतो यद्ध वो बलं जनाँ अचु-
वीतन । गिरीँरचुच्यवीतन ॥ १२ ॥ यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना । शृणोति
श्चिदेषाम् ॥ १३ ॥ प्र यात शीभमाशुभिः सन्ति कण्वेषु वो दुवः । तत्रो षु
दयाध्वै ॥ १४ ॥ अस्ति हि ष्मा मदाय वः स्मसि ष्मा वयमेषाम् । विश्वं चिदा-
र्जीवसे ॥ १५ ॥ १४ ॥

॥ ३८ ॥ १—१५ कण्वो घौर ऋषिः ॥ मरुतो देवता ॥ छन्दः–१, ८, ११,
, १५, ४, गायत्री । २, ६, ७, ९, १० निचृद्गायत्री । ३ पादनिचृद्-
यत्री । ५, १२ पिपीलिका मध्या निचृत् । १४ यवमध्या विराड् गायत्री ॥
्जः स्वरः ॥

॥ ३८ ॥ कद्ध नूनं कधप्रियः पिता पुत्रं न हस्तयोः । दधिध्वे वृक्तबर्हिषः
१ ॥ क्व नूनं कद्वो अर्थं गन्ता दिवो न पृथिव्याः । क्व वो गावो न रण्यन्ति

॥ २ ॥ क्व वः सुम्ना नव्यांसि मरुतः क्व सुविता । क्वो३ विश्वानि सौभगा ॥ ३
यद्यूयं पृश्निमातरो मर्तासः स्यातन । स्तोता वो अमृतः स्यात् ॥ ४ ॥ मा वो मृ
न यवसे जरिता भूदजोष्यः । पथा यमस्य गादुप ॥ ५ ॥ १५ ॥ मो षु णः परापरा
र्ऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह ॥ ६ ॥ सत्यं त्वेषा अमवन्तो धन्
ञ्चिदा रुद्रियासः । मिहं कृण्वन्त्यवाताम् ॥ ७ ॥ वाश्रेव विद्युन्मिमाति वत्सं
माता सिषक्ति । यदेषां वृष्टिरसर्जि ॥ ८ ॥ दिवा चित्तमः कृण्वन्ति पर्जन्येनो
वाहेन । यत्पृथिवीं व्युन्दन्ति ॥ ९ ॥ अध स्वनान्मरुतां विश्वमा सद्म पार्थिवम्
अरेजन्त प्र मानुषाः ॥ १० ॥ १६ ॥ मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु ।
तेमखिद्रयामभिः ॥ ११ ॥ स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् । सु
स्कृता अभीशवः ॥ १२ ॥ अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम् । अ
मित्रं न दर्शतम् ॥ १३ ॥ मिमीहि श्लोकमास्ये पर्जन्य इव ततनः । गाय गाय
मुक्थ्यम् ॥ १४ ॥ वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम् । अस्मे वृद्धा अ
न्निह ॥ १५ ॥ १७ ॥

॥ ३९ ॥ १—१० कण्वो घौर ऋषिः ॥ मरुतो देवता ॥ छन्दः—१,
९ पथ्याबृहती । ७ उपरिष्टाद्विराड् बृहती । २, ८, १० विराट् सतः पङ्क्ति
४, ६, निचृत्सतः पङ्क्तिः । ३ अनुष्टुप् । स्वरः—१, ५, ९, ७, मध्यमः ।
८, १०, ४, ६, पञ्चमः । ३ गान्धारः ॥

॥ ३९ ॥ प्र यदित्था परावतः शोचिर्न मानमस्यथ । कस्य क्रत्वा मरुतः
स्य वर्पसा कं याथ कं ह धूतयः ॥ १ ॥ स्थिरा वः सन्त्वायुधा पराणुदे वीळू
प्रतिष्कभे । युष्माकमस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः ॥ २ ॥ परा
यत्स्थिरं हथ नरो वर्तयथा गुरु । वि याथन वनिनः पृथिव्या व्याशाः पर्वतान्
॥ ३ ॥ नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां रिशादसः । युष्माकमस्तु
विषी तना युजा रुद्रासो नू चिदाधृषे ॥ ४ ॥ प्र वेपयन्ति पर्वतान्वि विञ्चन्ति
नस्पतीन् । प्रो आरत मरुतो दुर्मदा इव देवासः सर्वया विशा ॥ ५ ॥ १८
उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः । आ वो यामाय पृथिवी चिदश्रोद
भयन्त मानुषाः ॥ ६ ॥ आ वो मक्षू तनाय कं रुद्रा अवो वृणीमहे । गन्ता
नोऽवसा यथा पुरेत्था कण्वाय बिभ्युषे ॥ ७ ॥ युष्मेषितो मरुतो मर्त्येषित
यो नो अभ्व ईषते । वि तं युयोत शवसा व्योजसा वि युष्माकाभिरूतिभिः ॥

सामि हि प्रयज्यवः कण्वं दद प्रचेतसः । असामिभिर्मरुत आ नं ऊतिभिर्गन्ता
ष्टं न विद्युतः ॥ ९ ॥ असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः । ऋ-
द्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम् ॥ १० ॥ १९ ॥

॥ ४० ॥ १—८ कण्वो घौर ऋषिः ॥ बृहस्पतिर्देवता ॥ छन्दः—२, १, ८
चृदुपरिष्टाद्बृहती । ५ पथ्याबृहती । ३, ७ आर्चीत्रिष्टुप् । ४, ६ शतः पङ्क्ति-
चृत्पङ्क्तिः ॥ स्वरः—१, २, ८, ५ मध्यमः । ३, ७ धैवतः । ४, ६ पञ्चमः ॥

॥ ४० ॥ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उप प्र यन्तु मरुतः सुदा-
इन्द्र प्राशूर्भवा सचा ॥ १ ॥ त्वामिद्धि सहसस्पुत्र मर्त्यं उपब्रूते धने हिते ।
वीर्यं मरुत आ स्वश्व्यं दधीत यो व आचके ॥ २ ॥ प्रैतु ब्रह्मणस्पतिः प्र दे-
तु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ ३ ॥ यो
घते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः । तस्मा इळां सुवीरामा यजाम-
सुप्रतूर्तिमनेहसम् ॥ ४ ॥ प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो
रुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ५ ॥ २० ॥ तमिद्वोचेमा विदथे-
शम्भुवं मन्त्रं देवा अनेहसम् । इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो
श्नवत् ॥ ६ ॥ को देवयन्तमश्नवज्जनं को वृक्तबर्हिषम् । प्रप्र दाश्वान्पस्त्याभिर-
थतान्तर्वावत्क्षयं दधे ॥ ७ ॥ उप क्षत्रं पृञ्चीत हन्ति राजभिर्भये चित्सुक्षितिं
। नास्य वर्ता न तरुता महाधने नार्भे अस्ति वज्रिणः ॥ ८ ॥ २१ ॥

॥ ४१ ॥ १-९ कण्वो घौर ऋषिः ॥ देवता—१-३, ७-९ वरुणमित्रार्यमणः ।
-६ आदित्याः ॥ छन्दः—१, ४, ५, ८, गायत्री । २, ३, ६ विराड् गायत्री । ७,
निचृद्गायत्री ॥ १-९ षड्जः स्वरः ॥

॥ ४१ ॥ यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा । नू चित्स दभ्यते जनः
१ ॥ यं बाहुतेव पिप्रति पान्ति मर्त्यं रिषः । अरिष्टः सर्व एधते ॥ २ ॥ वि
र्गा वि द्विषः पुरो घ्नन्ति राजान एषाम् । नयन्ति दुरिता तिरः ॥ ३ ॥ सुगः
था अनृक्षर आदित्यास ऋतं यते । नात्रावखादो अस्ति वः ॥ ४ ॥ यं यज्ञं
था नर आदित्या ऋजुना पथा । प्र वः स धीतये नशत् ॥ ५ ॥ २२ ॥ स
नं मर्त्यो वसु विश्वं तोकमुत त्मना । अच्छा गच्छत्यस्तृतः ॥ ६ ॥ कथा राधा-
सखायः स्तोमं मित्रस्यार्यम्णः । महि प्सरो वरुणस्य ॥ ७ ॥ मा वो घ्नन्तं

मा शपन्तं प्रति वोचे देवयन्तम् । सुम्नैरिद्व आ विवासे ॥ ८ ॥ चतुरश्चिद्ददम
द्विभीयादा निधातोः । न दुरुक्ताय स्पृहयेत् ॥ ६ ॥ २३ ॥

॥ ४२ ॥ १–१० कण्वो घौर ऋषिः ॥ पूषा देवता ॥ छन्दः १, ६
चृद्गायत्री । २, ३, ५–८, १० गायत्री ४ विराड् गायत्री ॥ षड्जः स्वरः ।

॥ ४२ ॥ सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात् । सक्ष्वा देव प्र णस
॥ १ ॥ यो नः पूषन्नघो वृको दुःशेव आदिदेशति । अप स्म तं पथो जहि ॥
अप त्यं परिपन्थिनं मुषीवाणं हुरश्चितम् । दूरमधि स्रुतेरज ॥ ३ ॥ त्वं तस्य
याविनोऽघशंसस्य कस्य चित् । पदाभि तिष्ठ तपुषिम् ॥ ४ ॥ आ तत्ते
मन्तुमः पूषन्नवो वृणीमहे । येन पितॄनचोदयः ॥ ५ ॥ २४ ॥ अधा नो वि
सौभग हिरण्यवाशीमत्तम । धनानि सुषणा कृधि ॥ ६ ॥ अति नः सश्चतो
सुगा नः सुपथा कृणु । पूषन्निह क्रतुं विदः ॥ ७ ॥ अभि सूयवसं नय न
ज्वारो अध्वने । पूषन्निह क्रतुं विदः ॥ ८ ॥ शग्धि पूर्धि प्र यंसि च शिशी
भास्युदरम् । पूषन्निह क्रतुं विदः ॥ ६ ॥ न पूषणं मेथामसि सूक्तैरभि गृणीम
वसूनि दस्ममीमहे ॥ १० ॥ २५ ॥

॥ ४३ ॥ १–६ कण्वो घौर ऋषिः ॥ देवता–१, २, ४–६ रुद्रः । ३ मि
रुणौ । ७–६ सोमः ॥ छन्दः– १–४, ७, ८ गायत्री ५ विराड्गायत्र
पादनिचृद्गायत्री । ६ अनुष्टुप् ॥ स्वरः १–८ षड्जः । ६ गान्धारः ॥

॥ ४३ ॥ कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे । वोचेम शन्तमं हृदे ॥
यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम् ॥
यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति । यथा विश्वे सजोषसः ॥ ३ ॥
थपतिं मेधपतिं रुद्रं जलाषभेषजम् । तच्छंयोः सुम्नमीमहे ॥ ४ ॥ यः शुक्र
सूर्यो हिरण्यमिव रोचते । श्रेष्ठो देवानां वसुः ॥ ५ ॥ २६ ॥ शं नः करत
सुगं मेषाय मेष्ये । नृभ्यो नारिभ्यो गवे ॥ ६ ॥ अस्मे सोम श्रियमधि नि
शतस्य नृणाम् । महि श्रवस्तुविनृम्णम् ॥ ७ ॥ मा नः सोम परिबाधो मारा
जुहुरन्त । आ न इन्द्रो वाजे भज ॥ ८ ॥ यास्ते प्रजा अमृतस्य परस्मिन्धा
तस्य । मूर्धा नाभा सोम वेन आभूषन्तीः सोम वेदः ॥ ६ ॥ २७ ॥ ८ ॥

॥ ४४ ॥ १–१४ प्रस्कण्व ऋषिः ॥ देवता १–१४ अग्निः ॥ छन्दः
५ उपरिष्टाद्विराड्बृहती ३ निचृदुपरिष्टाद्बृहती ७, ११ निचृत्पथ्याबृ

भुरिग्बृहती १३ पथ्याबृहती च २, ४, ६, ८,१४ विराट् सतः पङ्क्तिः १०
ड्विस्तारपङ्क्तिः । ६ आर्ची त्रिष्टुप्॥ स्वरः—१, ५, ३, ७, ११—१३ मध्यमः
४,६,८, १४, १०पञ्चमः । ६ धैवतः ॥

॥ ४४ ॥ अग्ने॒ विव॑स्वदु॒षस॑श्चि॒त्रं राधो॑ अमर्त्य। आ दा॒शुषे॑ जातवेदो वहा
त्या दे॒वाँ उ॑ष॒र्बुधः॑ ॥ १ ॥ जुष्टो॒ हि दू॒तो असि॑ हव्य॒वाह॒नोऽग्ने॑ र॒थीर॑ध्व॒रा-
म् । स॒जूर॒श्विभ्या॑मु॒षसा॑ सु॒वीर्य॑म॒स्मे धे॑हि॒ श्रवो॑ बृ॒हत् ॥ २ ॥ अ॒द्या दू॒तं वृ॑णी-
वसु॑म॒ग्निं पु॑रुप्रि॒यम् । धू॒मके॑तुं॒ भाऋ॑जीकं॒ व्यु॑ष्टिषु य॒ज्ञाना॑मध्वर॒श्रिय॑म् ॥ ३ ॥
यवि॑ष्ठ॒मति॑थिं॒ स्वाहु॑तं॒ जुष्टं॒ जना॑य दा॒शुषे॑ । दे॒वाँ अच्छा॒ यात॑वे जा॒तवे॑दसम॒-
मी॑ळे॒ व्यु॑ष्टिषु ॥ ४ ॥ स्त॒वि॒ष्यामि॒ त्वाम॒हं विश्व॑स्यामृत भोजन । अग्ने॑ त्रा॒-
म॒मृतं॑ मियेध्य॒ यजि॑ष्ठं हव्यवाहन ॥ ५ ॥ २८ ॥ सु॒शंसो॑ बोधि गृण॒ते य॑वि-
मधु॑जिह्वः॒ स्वाहु॑तः । प्रस्क॑ण्वस्य प्रति॒रन्नायु॑र्जी॒वसे॑ नम॒स्या दैव्यं॒ जन॑म् ॥६॥
॑रं वि॒श्ववे॑दसं॒ सं हि त्वा॒ विश॑ इ॒न्धते॑ । स आ व॑ह पुरुहूत॒ प्रचे॑त॒सोऽग्ने॑ दे॒-
इ॒ह द्र॒वत् ॥ ७ ॥ स॒वि॒तार॑मु॒षस॑म॒श्विना॒ भग॑म॒ग्निं व्यु॑ष्टिषु॒ क्षपः॑ । कण्वा॑स-
सु॒तसो॑मास इन्धते हव्य॒वाहं॑ स्वध्वर ॥ ८ ॥ पति॒र्ह्य॑ध्व॒राणा॒मग्ने॑ दू॒तो वि॒-
सि॑ । उ॒ष॒र्बुध॒ आ व॑ह॒ सोम॑पीतये दे॒वाँ अ॒द्य स्व॒र्दृशः॑ ॥ ९ ॥ अग्ने॒ पूर्वा॒ अ-
सो॑ विभावसो दी॒देथ॑ वि॒श्वद॑र्शतः । असि॒ ग्रामे॑ष्ववि॒ता पु॒रोहि॒तोऽसि॑ य॒ज्ञेषु
षः ॥ १० ॥ २९ ॥ नि त्वा॑ य॒ज्ञस्य॒ साध॑न॒मग्ने॒ होता॑रमृ॒त्विज॑म् । म॒नु॒ष्वद्दे॑व
हि॒ प्रचे॑तसं जी॒रं दू॒तमम॑र्त्यम् ॥ ११ ॥ यद्दे॒वानां॑ मित्रमहः पु॒रोहि॑तोऽन्त॑रो
सि दू॒त्य॑म् । सिन्धो॑रिव॒ प्रस्व॑नितास ऊ॒र्मयो॒ऽग्नेर्भ्रा॑जन्ते अ॒र्चयः॑ ॥ १२ ॥ श्रु॒धि
कर्ण वह्नि॑भिर्दे॒वैर॑ग्ने स॒याव॑भिः । आ सी॑दन्तु ब॒र्हिषि॑ मि॒त्रो अ॑र्य॒मा प्रा॑त॒र्या-
सो अध्व॒रम् ॥ १३ ॥ शृ॒ण्वन्तु॒ स्तोमं॑ म॒रुतः॑ सु॒दान॑वोऽग्निजि॒ह्वा ऋ॑ता॒वृधः॑ ।
तु सोमं॒ वरु॑णो धृ॒तव्र॑तो॒ऽश्विभ्या॑मु॒षसा॑ स॒जूः ॥ १४ ॥ ३० ॥

॥ ४५ ॥ १—१० प्रस्कण्वः काण्व ऋषिः॥ १—१० अग्निर्देवा देवताः ॥
:—१ भुरिगुष्णिक् । ५ उष्णिक् । २, ३, ७, ८ अनुष्टुप् । ४ निचृदनुष्टुप् ।
६, १० विराडनुष्टुप् ॥ स्वरः—१, ५ ऋषभः । २—४,६—१० गान्धारः ॥

॥ ४५ ॥ त्वम॑ग्ने॒ वसूँ॑रि॒ह रु॒द्राँ आ॑दि॒त्याँ उ॒त । यजा॑ स्वध्व॒रं जनं॒ मनु॑जातं
घृ॒तप्रुषम् ॥ १ ॥ श्रु॒ष्टी॒वानो॒ हि दा॒शुषे॑ दे॒वा अ॑ग्ने॒ विचे॑तसः । तान्रो॑हिदश्व गिर्व-
त्रय॑स्त्रिंशत॒मा व॑ह ॥ २ ॥ प्रि॒य॒मे॒ध॒वद॑त्रि॒वज्जात॑वेदो विरूप॒वत् । अ॒ङ्गि॒र॒स्वन्म॑-

ह्विवत् प्रस्कण्वस्य श्रुधी हवम् ॥ ३ ॥ महिकेरव ऊतये प्रियमेधा अहूषत । र
न्तमध्वराणामग्निं शुक्रेण शोचिषा ॥ ४ ॥ घृताहवन सन्त्येमा उ षु श्रुधी गि
याभिः कण्वस्य सूनवो हवन्तेऽवसे त्वा ॥ ५ ॥ ३१ ॥ त्वां चित्रश्रवस्तम ह
विन्तु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे ॥ ६ ॥ नि त्वा हो
रमृत्विजं दधिरे वसुवित्तमम् । श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु ॥
आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः । बृहद्भा बिभ्रतो हविरग्ने म
दाशुषे ॥ ८ ॥ प्रातर्याव्णः सहस्कृत सोमपेयाय सन्त्य । इहाद्य दैव्यं जनं ब
र्हिरा सादया वसो ॥ ९ ॥ अर्वाञ्चं दैव्यं जनमग्ने यक्ष्व सहूतिभिः । अयं सोम
दानवस्तं पात तिरोअह्न्यम् ॥ १० ॥ ३२ ॥

॥ ४६ ॥ १–१५ प्रस्कण्वः काण्व ऋषिः ॥ अश्विनौ देवते ॥ छन्दः
१० विराड्गायत्री ३, ११, ६, १२, १४, गायत्री । ५, ७, ९, १३, १५,
४, ८, निचृद्गायत्री ॥ १–१५ षड्जः स्वरः ॥

॥ ४६ ॥ एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना
॥ १ ॥ या दस्रा सिन्धुमातरा मनोतरा रयीणाम् । धिया देवा वसुविदा ॥
वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि । यद्वां रथो विभिष्पतात् ॥ ३ ॥
विषा जारो अपां पिपर्ति पपुरिर्नरा । पिता कुटस्य चर्षणिः ॥ ४ ॥ आदारो
मतीनां नासत्या मतवचसा । पातं सोमस्य धृष्णुया ॥ ५ ॥ ३३ ॥ या नः
परदश्विना ज्योतिष्मती तमस्तिरः । तामस्मे रासाथामिषम् ॥ ६ ॥ आ नो न
मतीनां यातं पाराय गन्तवे । युञ्जाथामश्विना रथम् ॥ ७ ॥ अरित्रं वां दिवस
तीर्थे सिन्धूनां रथः । धिया युयुज्र इन्दवः ॥ ८ ॥ दिवस्कण्वास इन्दवो वसु
न्धूनां पदे । स्वं वव्रिं कुह धित्सथः ॥ ९ ॥ अभूदु भा उ अंशवे हिरण्यं प्रति सूर्
व्यख्यज्जिह्वयासितः ॥ १० ॥ ३४ ॥ अभूदु पारमेतवे पन्था ऋतस्य साधुया ।
दर्शि वि स्रुतिर्दिवः ॥ ११ ॥ तत्तदिदश्विनोरवो जरिता प्रति भूषति । मदे
मस्य पिप्रतोः ॥ १२ ॥ वावसाना विवस्वति सोमस्य पीत्या गिरा । मनुष्वच्
आ गतम् ॥ १३ ॥ युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् । ऋतावनथो अक्तु
॥ १४ ॥ उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभिः
॥ १५ ॥ ३५ ॥ ३ ॥

॥ ४७ ॥ १–१० प्रस्कण्वः काण्व ऋषिः ॥ अश्विनौ देवते ॥ छन्दः–१,

वृत्पथ्या बृहती । ३, ७ पथ्या बृहती । ६ विराड् पथ्या बृहती । २, ६, ८
वृत्सतः पङ्क्तिः । ४, १० सतः पङ्क्तिः ॥ स्वरः–१, ५, ३, ७, ६ मध्यमः २,
८, ४, १० पञ्चमः ॥

॥ ४७ ॥ अयं वां मधुमत्तमः सुतः सोम ऋतावृधा । तमश्विना पिबतं ति-
रोअह्न्यं धत्तं रत्नानि दाशुषे ॥१॥ त्रिवन्धुरेण त्रिवृता सुपेशसा रथेना यातमश्विना
ण्वासो वां ब्रह्म कृण्वन्त्यध्वरे तेषां सु शृणुतं हवम् ॥ २ ॥ अश्विना मधुमत्तमं
तं सोममृतावृधा । अथाद्य दस्रा वसु बिभ्रता रथे दाश्वांसमुप गच्छतम् ॥ ३ ॥
षधस्थे बर्हिषि विश्ववेदसा मध्वा यज्ञं मिमिक्षतम् । कण्वासो वां सुतसोमा अ-
द्यवो युवां हवन्ते अश्विना ॥ ४ ॥ याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना ।
भिः ष्वस्माँ अवतं शुभस्पती पातं सोममृतावृधा ॥ ५ ॥ १ ॥ सुदासे दस्रा
बिभ्रता रथे पृक्षो वहतमश्विना । रयिं समुद्रादुत वा दिवस्पर्यस्मे धत्तं पुरु-
हम् ॥ ६ ॥ यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे । अतो रथेन सुवृता
आ गतं साकं सूर्यस्य रश्मिभिः ॥ ७ ॥ अर्वाञ्चा वां सप्तयोऽध्वरश्रियो व-
तु सवनेदुप । इषं पृञ्चन्ता सुकृते सुदानव आ बर्हिः सीदतं नरा ॥ ८ ॥ तेन
सत्या गतं रथेन सूर्यत्वचा येन शश्वदूहथुर्दाशुषे वसु मध्वः सोमस्य पीतये ॥ ९ ॥
थेभिरर्वागवसे पुरूवसू अर्कैश्च नि ह्वयामहे । शश्वत्कण्वानां सदसि प्रिये हि
सोमं पपथुरश्विना ॥ १० ॥ २ ॥

॥ ४८ ॥ १–१६ प्रस्कण्व ऋषिः ॥ उषा देवता ॥ छन्दः–१, ३, ७, ९
राड् पथ्या बृहती ५, ११, १३ निचृत् पथ्या बृहती च १२ बृहती १५ पथ्या
ती ४, ६, १४ विराड् सतः पङ्क्तिः २, १०, १६ निचृत्सतः पङ्क्तिः ८ पङ्क्तिः
रः–१, ३, ७, ९, ५, ११, १३, १२, १५ मध्यमः ४, ६, १४, २, १०, १६,
पञ्चमः ॥

॥ ४८ ॥ सह वामेन न उषो व्युच्छा दुहितर्दिवः । सह द्युम्नेन बृहता विभा-
रि राया देवि दास्वती ॥ १ ॥ अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवन्त व-
वे । उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनाम् ॥ २ ॥ उवासोषा उच्छाच्च
देवी जीरा रथानाम् । ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥ ३ ॥
ो ये ते प्र यामेषु युञ्जते मनो दानाय सूरयः । अत्राह तत्कण्व एषां कण्व-
ो नाम गृणाति नृणाम् ॥ ४ ॥ आ घा योषेव सूनर्युषा याति प्रभुञ्जती । ज-

रयन्ती वृजनं पुद्वदीयत उत्पातयति पक्षिणः ॥ ५ ॥ ३ ॥ वि या सृजति स
न्यं१र्थिनः पुदं न वेत्योदती । वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनी
॥ ६ ॥ एषायुक्त परावतः सूर्यस्योदयनादधि । शतं रथेभिः सुभगोषा
वि यात्यभि मानुषान् ॥ ७ ॥ विश्वमस्या नानाम चक्षसे जगज्ज्योतिष्कृणो
सूनरी । अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्त्रिधः ॥ ८ ॥ उष
भाहि भानुना चन्द्रेण दुहितर्दिवः । आवहन्ती भूर्यस्मभ्यं सौभगं व्युच्छन्ती
विष्टिषु ॥ ९ ॥ विश्वस्य हि प्राणनं जीवनं त्वे वि यदुच्छसि सूनरि । सा नो
थेन बृहता विभावरि श्रुधि चित्रामघे हवम् ॥ १० ॥ ४ ॥ उषो वाजं हि वंस्व
श्चित्रो मानुषे जने । तेना वह सुकृतो अध्वराँ उप ये त्वा गृणन्ति वन्हयः ॥१
विश्वान्देवाँ आ वह सोमपीतयेऽन्तरिक्षादुषस्त्वम् । सास्मासु धा गोमदश्वावदुक
१मुषो वाजं सुवीर्यम् ॥ १२ ॥ यस्या रुशन्तो अर्चयः प्रति भद्रा अदृक्षत । सा
रयिं विश्ववारं सुपेशसमुषा ददातु सुग्म्यम् ॥ १३ ॥ ये चिद्धि त्वामृषयः पूर्वे
तये जुहूरेऽवसे महि । सा नः स्तोमाँ अभि गृणीहि राधसोषः शुक्रेण शोचि
॥ १४ ॥ उषो यदद्य भानुना वि द्वारावृणवो दिवः । प्र नो यच्छतादवृकं
छर्दिः प्र देवि गोमतीरिषः ॥ १५ ॥ सं नो राया बृहता विश्वपेशसा मिमि
समिळाभिरा । सं द्युम्नेन विश्वतुरोषो महि सं वाजैर्वाजिनीवति ॥ १५ ॥

॥ ४९ ॥ १—४ प्रस्कण्वः काण्व ऋषिः ॥ उषा देवता ॥ निचृदनुष्टुप् छन्द
गान्धारः स्वरः ॥

॥ ४९ ॥ उषो भद्रेभिरा गहि दिवश्चिद्रोचनादधि । वहन्त्वरुणप्सव
त्वा सोमिनो गृहम् ॥ १ ॥ सुपेशसं सुखं रथं यमध्यस्था उषस्त्वम् । तेना
वसं जनं प्रावाद्य दुहितर्दिवः ॥ २ ॥ वयश्चित्ते पतत्रिणो द्विपच्चतुष्पदर्जुनि ।
प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ॥ ३ ॥ व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि
चनम् । तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषत ॥ ४ ॥ ६ ॥

॥ ५० ॥ १—१३ प्रस्कण्वः काण्व ऋषिः ॥ सूर्यो देवता ॥ छन्दः—
६ निचृद्गायत्री । २, ४, ८, ९ पिपीलिकामध्या निचृद्गायत्री । ३ गायत्री
यवमध्या विराड्गायत्री । ७ विराड्गायत्री १०, ११ निचृदनुष्टुप् । १२,
अनुष्टुप् ॥ स्वरः—१—९ षड्जः १०—१३ गान्धारः ॥

॥ ५० ॥ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ।

ा त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥ २ ॥ अदृश्र-
य केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा ॥ ३ ॥ तरणिर्विश्व-
ातो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ॥ ४ ॥ प्रत्यङ् देवानां विशः
यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वं स्वर्दृशे ॥ ५ ॥ ७ ॥ येना पावक चक्षसा भु-
यन्तं जनाँ अनु । त्वं वरुण पश्यसि ॥ ६ ॥ वि द्यामेषि रजस्पृथ्वहा मिमानो
क्तुभिः । पश्यञ्जन्मानि सूर्य ॥ ७ ॥ सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।
चिष्केशं विचक्षण ॥ ८ ॥ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः । ताभि-
ति स्वयुक्तिभिः ॥ ९ ॥ उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा
मगन्म ज्योतिरुत्तमम् ॥ १० ॥ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं
सूर्य हरिमाणं च नाशय ॥ ११ ॥ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।
ो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥ १२ ॥ उदगादयमादित्यो विश्वेन स-
ा सह । द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम् ॥ १३ ॥ ८ ॥ ९ ॥

॥ ५१ ॥ १—१५ सव्य आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—
९, १० जगती । २, ५, ८ विराड् जगती । ११—१३ निचृज्जगती ३,
भुरिक् त्रिष्टुप् ६, ७ त्रिष्टुप् १४, १५ विराट् त्रिष्टुप् ॥ स्वरः—१, २, ९,
, ५, ११—१३, ८ निषादः । ३, ४, ६, ७, १४, १५ धैवतः स्वरः ॥

॥ ५१ ॥ अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम् । य-
द्यावो न विचरन्ति मानुषा भुजे मंहिष्ठमभि विप्रमर्चत ॥ १ ॥ अभीमवन्वन्त्स्व-
ष्टिमूतयोऽन्तरिक्षप्रां तविषीभिरावृतम् । इन्द्रं दक्षास ऋभवो मदच्युतं शत-
जवनी सूनृतारुहत् ॥ २ ॥ त्वं गोत्रमङ्गिरोभ्योऽवृणोरपोतात्रये शतदुरेषु
तुवित् । ससेन चिद्विमदायावहो वस्वाजावद्रिं वावसानस्य नर्तयन् ॥ ३ ॥
पामपिधानावृणोरपाधारयः पर्वते दानुमद्वसु । वृत्रं यदिन्द्र शवसावधीरहिमा-
सूर्यं दिव्यारोहयो दृशे ॥ ४ ॥ त्वं मायाभिरप मायिनोऽधमः स्वधाभिर्ये
धि शुप्तावजुह्वत । त्वं पिप्रोर्नृमणः प्रारुजः पुरः प्र ऋजिश्वानं दस्युहत्येष्वाविथ
॥ ५ ॥ त्वं कुत्सं शुष्णहत्येष्वाविथारन्धयोऽतिथिग्वाय शम्बरम् । महान्तं
र्बुदं नि क्रमीः पदा सनादेव दस्युहत्याय जज्ञिषे ॥ ६ ॥ त्वे विश्वा तविषी
ध्र्यग्घिता तव राधः सोमपीथाय हर्षते । तव वज्रश्चिकिते बाह्वोर्हितो वृश्चा श-
व विश्वानि वृष्ण्या ॥ ७ ॥ वि जानीह्यार्यान्ये च दस्यवो बर्हिष्मते रन्धया
दव्रतान् । शाकी भव यजमानस्य चोदिता विश्वेत्ता ते सधमादेषु चाकन

॥ ८ ॥ अनुव्रताय रन्धयन्नपव्रतानाभूभिरिन्द्रः श्नथयन्ननाभुवः । वृद्धस्य चि
तो द्यामिनक्षतः स्तवानो वम्रो वि जघान संदिहः ॥ ६ ॥ तक्षद्यत्त उशना
हंसा सहो वि रोदसी मज्मना बाधते शवः । आ त्वा वातस्य नृमणो मन
आ पूर्यमाणमवहन्नभि श्रवः ॥ १० ॥ १० ॥ मन्दिष्ट यदुशने काव्ये सचाँ
चङ्क्रू वङ्कुतराधि तिष्ठति । उग्रो ययिं निरपः स्रोतसासृजद्वि शुष्णस्य दृं
ऐरयत्पुरः ॥ ११ ॥ आ स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु
न्दसे । इन्द्र यथा सुतसोमेषु चाकनोऽनर्वाणं श्लोकमा रोहसे दिवि ॥ १
अददा अर्भां महते वचस्यवे कक्षीवते वृचयामिन्द्र सुन्वते । मेनाभवो वृषण
सुक्रतो विश्वेत्ता ते सवनेषु प्रवाच्या ॥ १३ ॥ इन्द्रो अश्रायि सुध्यो निरेके
ज्रेषु स्तोमो दुर्यो न यूपः । अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्र
॥ १४ ॥ इदं नमो वृषभाय स्वराजे सत्यशुष्माय तवसेऽवाचि । अस्मिन्निन्
जने सर्ववीराः स्मत्सूरिभिस्तव शर्मन्त्स्याम ॥ १५ ॥ ११ ॥

॥ ५२ ॥ १–१५ सव्य आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–
भुरिक् त्रिष्टुप् । ७ त्रिष्टुप् । ६, १० स्वराट् त्रिष्टुप् । १२, । १३, १५ निचृत् त्रि
२–४ निचृज्जगती । ५, १४ जगती । ६, ११ विराड् जगती ॥ स्वरः–१,
१०, १२, १३, १५ धैवतः । २–६, ११, १४, निषादः ॥

॥ ५२ ॥ त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभ्वः साकमीरते ।
न वाजं हवनस्यदं रथमेन्द्रं ववृत्यामवसे सुवृक्तिभिः ॥ १ ॥ स पर्वतो न ध
ष्वच्युतः सहस्रमूतिस्तविषीषु वावृधे । इन्द्रो यद्वृत्रमवधीन्नदीवृतमुब्जन्नर्णांसि
षाणो अन्धसा ॥ २ ॥ स हि द्वरो द्वरिषु वव्र ऊधनि चन्द्रबुध्नो मदवृद्धो मन
भिः । इन्द्रं तमह्वे स्वपस्यया धिया मंहिष्ठरातिं स हि पप्रिरन्धसः ॥ ३ ॥ आ
पृणन्ति दिवि सद्मबर्हिषः समुद्रं न सुभ्वः स्वा अभिष्टयः । तं वृत्रहत्ये अनु तस
तयः शुष्मा इन्द्रमवाता अहुतप्सवः ॥ ४ ॥ अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वी
प्रवणे सस्रुरूतयः । इन्द्रो यद्वज्री धृषमाणो अन्धसा भिनद्वलस्य परिधीँरिव
॥ ५ ॥ १२ ॥ परीं घृणा चरति तित्विषे शवोऽपो वृत्वी रजसो बुध्नमाशयत् । वृ
यत्प्रवणे दुर्गृभिश्वनो निजघन्थ हन्वोरिन्द्र तन्यतुम् ॥ ६ ॥ ह्रदं न हि त्वा न्यृषन्
यो ब्रह्माणीन्द्र तव यानि वर्धना । त्वष्टा चित्ते युज्यं वावृधे शवस्ततक्ष व
भिभूत्योजसम् ॥ ७ ॥ जघन्वाँ उ हरिभिः संभृतक्रतविन्द्र वृत्रं मनुषे गातुयन्न

च्छथा बाह्वोर्वज्रमायसमधारयो दिव्या सूर्यं दृशे ॥ ८ ॥ बृहत्स्वश्चन्द्रममंव-
क्थ्यंमकृण्वत भियसा रोहणं दिवः । यन्मानुषप्रधना इन्द्रमूतयः स्वर्नृषाचो
तोऽमदन्ननु ॥ ९ ॥ द्यौश्चिदस्यामवाँ अहेः स्वनादयोयवीद्भियसा वज्र इन्द्र
। वृत्रस्य यद्बद्बधानस्य रोदसी मदे सुतस्य शवसाभिनच्छिरः ॥ १० ॥ १३ ॥
न्विन्द्र पृथिवी दशभुजिरहानि विश्वा ततनन्त कृष्टयः । अत्राह ते मघवन्वि-
ं सहो द्यामनु शवसा बर्हणा भुवत् ॥ ११ ॥ त्वमस्य पारे रजसो व्योमनः
भूत्योजा अवसे धृषन्मनः । चकृषे भूमिं प्रतिमानमोजसोऽपः स्वः परिभूरेष्या
वम् ॥ १२ ॥ त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः । वि-
माप्रा अन्तरिक्षं महित्वा सत्यमद्धा नकिरन्यस्त्वावान् ॥ १३ ॥ न यस्य द्या-
पृथिवी अनु व्यचो न सिन्धवो रजसो अन्तमानशुः । नोत स्ववृष्टिं मदे अस्य
यत एको अन्यच्चकृषे विश्वमानुषक् ॥ १४ ॥ आर्चन्नत्र मरुतः सस्मिन्नाजौ
श्वे देवासो अमदन्ननु त्वा । वृत्रस्य यद्भृष्टिमता वधेन नि त्वमिन्द्र प्रत्यानं
न्थ ॥ १५ ॥ १४ ॥

॥ ५३ ॥ १–११ सव्य आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, ३ नि-
ज्जगती । २ भुरिग्जगती । ४ जगती । ५, ७ विराड्जगती । ६, ८, ९ त्रिष्टुप् ।
० भुरिक् त्रिष्टुप् । ११ सतः पङ्क्तिः ॥ स्वरः–१–५, ७ निषादः ६, ८–१० धैवतः
१ पञ्चमः ॥

॥ ५३ ॥ न्यू३षु वाचं प्र महे भरामहे गिर इन्द्राय सदने विवस्वतः । नू
द्धि रत्नं ससतामिवाविदन्न दुष्टुतिर्द्रविणोदेषु शस्यते ॥ १ ॥ दुरो अश्वस्य
इन्द्र गोरसि दुरो यवस्य वसुन इनस्पतिः । शिक्षानरः प्रदिवो अकामकर्शनः
खा सखिभ्यस्तमिदं गृणीमसि ॥ २ ॥ शचीव इन्द्र पुरुकृद्द्युमत्तम तवेदिदमभितश्चे-
ते वसु । अतः संगृभ्याभिभूत आ भर मा त्वायतो जरितुः काममूनयीः ॥ ३ ॥
भिर्द्युभिः सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना । इन्द्रेण दस्युं
यन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि ॥ ४ ॥ समिन्द्र राया समिषा रभेमहि
वाजेभिः पुरुश्चन्द्रैरभिद्युभिः । सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाश्वा-
या रभेमहि ॥ ५ ॥ १५ ॥ ते त्वा मदा अमदन्तानि वृष्ण्या ते सोमासो वृत्र-
येषु सत्पते । यत्कारवे दश वृत्राण्यप्रति बर्हिष्मते नि सहस्राणि बर्हयः ॥ ६ ॥
ा युधमुप घेदेषि धृष्णुया पुरा पुरं समिदं हंस्योजसा । नम्या यदिन्द्र सख्या

परावर्ति निबर्हयो नमुचिं नाम मायिनम् ॥ ७ ॥ त्वं करञ्जमुत पर्णयं वधी
जिष्ठयातिथिग्वस्य वर्तनी । त्वं शता वङ्गृदस्याभिनत्पुरोऽनानुदः परिषूता
जिश्वना ॥ ८ ॥ त्वमेताञ्जनराज्ञो द्विर्दशाबन्धुना सुश्रवसोपजग्मुषः । षष्टिं स
नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ॥ ९ ॥ त्वमाविथ सुश्रवसं
त्रोतिभिस्तव त्रामभिरिन्द्र तूर्वयाणम् । त्वमस्मै कुत्समतिथिग्वमायुं महे राज्ञे
अरन्धनायः ॥ १० ॥ य उदृचीन्द्र देवगोपाः सखायस्ते शिवतमा असाम ।
स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः ॥ ११ ॥ १६ ॥

॥ ५४ ॥ १-११ सव्य आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—
४, १० विराड्जगती । २, ३, ५ निचृज्जगती । ७ जगती । ६ विराट्त्रिष्टु
८, ९, ११ निचृत्त्रिष्टुप् । स्वरः—१-५, १०, ७ निषादः । ६, ८, ९, ११ धैवत

॥ ५४ ॥ मा नो अस्मिन्मघवन्पृत्स्वंहसि नहि ते अन्तः शवसः परीण
अक्रन्दयो नद्यो३रोरुवद्वना कथा न क्षोणीर्भियसा समारत ॥ १ ॥ अर्चा श
शाकिने शचीवते शृण्वन्तमिन्द्रं महयन्नभि ष्टुहि । यो धृष्णुना शवसा रोदसी
वृषा वृषत्वा वृषभो न्यृञ्जते ॥ २ ॥ अर्चा दिवे बृहते शूष्यं१ वचः स्वक्षत्रं
धृषतो धृषन्मनः । बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि
॥ ३ ॥ त्वं दिवो बृहतः सानु कोपयोऽव त्मना धृषता शम्बरं भिनत् । यन्मायिनो
न्दिनो मन्दिना धृषच्छितां गभस्तिमशनिं पृतन्यसि ॥ ४ ॥ नि यद्वृणक्षि श
नस्य मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना । प्राचीनेन मनसा बर्हणावता य
चित्कृणवः कस्त्वा परि ॥ ५ ॥ १७ ॥ त्वमाविथ नर्यं तुर्वशं यदुं त्वं तुर्वीतिं
य्यं शतक्रतो । त्वं रथमेतशं कृत्व्ये धने त्वं पुरो नवतिं दम्भयो नव ॥ ६
घा राजा सत्पतिः शूशुवज्जनो रातहव्यः प्रति यः शासमिन्वति । उक्था व
अभिगृणाति राधसा दानुरस्मा उपरा पिन्वते दिवः ॥ ७ ॥ असमं क्षत्रमसमा म
प्रसोमपा अपसा सन्तु नेमे । ये त इन्द्र ददुषो वर्धयन्ति महि क्षत्रं स्थविरं वृष्ण
॥ ८ ॥ तुभ्येदेते बहुला अद्रिदुग्धाश्चमूषदश्चमसा इन्द्रपानाः । व्यश्नुहि तर्पया
ममेषामथा मनो वसुदेयाय कृष्व ॥ ९ ॥ अपामतिष्ठद्धरुणह्वरं तमोऽन्तर्वृत्रस्य
रेषु पर्वतः । अभीमिन्द्रो नद्यो वव्रिणा हिता विश्वा अनुष्ठाः प्रवणेषु जिघ्नते ॥
स शेवृधमधि धा द्युम्नमस्मे महि क्षत्रं जनाषाळिन्द्र तव्यम् । रक्षा च नो मघोनः
सूरीन्राये च नः स्वपत्या इषे धाः ॥ ११ ॥ १८ ॥

॥ ५५ ॥ १–८ सव्य आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, ४ ज
ती। २, ५–७ निचृज्जगती । ३, ८ विराड्जगती ॥ १—८ निषादः स्वरः॥

॥ ५५ ॥ दिवश्चिदस्य वरिमा वि पप्रथ इन्द्रं न मह्ना पृथिवी चन प्रति । भीमस्तु-
मान्चर्षणिभ्य आतपः शिशीते वज्रं तेजसे न वंसगः ॥ १ ॥ सो अर्णवो न
ः समुद्रियः प्रति गृभ्णाति विश्रिता वरीमभिः । इन्द्रः सोमस्य पीतये वृषायते
ात्स युध्म ओजसा पनस्यते ॥ २ ॥ त्वं तमिन्द्र पर्वतं न भोजसे महो नृम्णस्य
णामिरज्यसि । प्र वीर्येण देवताति चेकिते विश्वस्मा उग्रः कर्मणे पुरोहितः ॥ ३ ॥
इद्वने नमस्युभिर्वचस्यते चारु जनेषु प्रब्रुवाण इन्द्रियम् । वृषा छन्दुर्भवति हर्यतो
। क्षेमेण धेनां मघवा यदिन्वति ॥ ४ ॥ स इन्महानि समिथानि मज्मना कृणोति
म ओजसा जनेभ्यः । अधा चन श्रद्दधति त्विषीमत इन्द्राय वज्रं निघनिघ्नते
म् ॥ ५ ॥ १९ ॥ स हि श्रवस्युः सदनानि कृत्रिमा क्ष्मया वृधान ओजसा
ाशयन् । ज्योतींषि कृण्वन्नवृकाणि यज्यवेऽव सुक्रतुः सर्तवा अपः सृजत् ॥ ६ ॥
नाय मनः सोमपावन्नस्तु तेऽर्वाञ्चा हरी वन्दनश्रुदा कृधि । यमिष्ठासः सा-
यो य इन्द्र ते न त्वा केता आ दभ्नुवन्ति भूर्णयः ॥ ७ ॥ अप्रक्षितं वसु बि-
र्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे । आवृतासोऽवतासो न कर्तृभिस्तनूषु
क्रतव इन्द्र भूरयः ॥ ८ ॥ २० ॥

॥ ५६ ॥ १–६ सव्य आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१, ३,
निचृज्जगती । २ जगती । ५ त्रिष्टुप् । ६ भुरिक् त्रिष्टुप् ॥ स्वरः–१–४
षादः । ५, ६ धैवतः ॥

॥ ५६ ॥ एष प्र पूर्वीरव तस्य चम्रिषोऽत्यो न योषामुदयंस्त भुर्वणिः ।
मह पाययते हिरण्ययं रथमावृत्या हरियोगमृभ्वसम् ॥ १ ॥ तं गूर्तयो ने-
षः परीणसः समुद्रं न संचरणे सनिष्यवः । पतिं दक्षस्य विदथस्य नू सहो
रिं न वेना अधि रोह तेजसा ॥ २ ॥ स तुर्वणिर्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न
जते तुजा शवः । येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि
॥ ३ ॥ देवी यदि तविषी त्वावृधोतय इन्द्रं सिषक्त्युषसं न सूर्यः । यो धृ-
ना शवसा बाधते तम इयर्ति रेणुं बृहदर्हरिष्वणिः ॥ ४ ॥ वि यत्तिरो धरु-
न्च्युतं रजोऽतिष्ठिपो दिव आतासु बर्हणा । स्वर्मीळ्हे यन्मद इन्द्र हर्ष्याह-
त्रं निरपामौब्जो अर्णवम् ॥ ५ ॥ त्वं दिवो धरुणं धिष ओजसा पृथिव्या इन्द्र

सदनेषु माहिनः । त्वं सुतस्य मदे अरिणा अपो वि वृत्रस्य समया पाष्यास
॥ ६ ॥ २१ ॥

॥ ५७ ॥ १–६ सव्य आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१,
४ जगती । ३ विराट् । ६ निचृज्जगती । ५ भुरिक् त्रिष्टुप् ॥ स्वरः—१-
६ निषादः । ५ मध्यमः ॥

॥ ५७ ॥ प्र मंहिष्ठाय बृहते बृहद्रये सत्यशुष्माय तवसे मतिं भरे । अ
मिव प्रवणे यस्य दुर्धरं राधो विश्वायु शवसे अपावृतम् ॥ १ ॥ अध ते वि
मनु हासदिष्टय आपो निम्नेव सवना हविष्मतः । यत्पर्वते न समशीत हर्यत
न्द्रस्य वज्रः श्नथिता हिरण्ययः ॥ २ ॥ अस्मै भीमाय नमसा समध्वर उषो
शुभ्र आ भरा पनीयसे । यस्य धाम श्रवसे नामेन्द्रियं ज्योतिरकारि हरितो
यसे ॥ ३ ॥ इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो ।
त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति नो हर्य तद्वचः ॥ ४ ॥ भूरि त
वीर्यं१तव स्मस्यस्य स्तोतुर्मघवन्काममा पृण । अनु ते द्यौर्बृहती वीर्यं मम इ
ते पृथिवी नेम ओजसे ॥ ५ ॥ त्वं तमिन्द्र पर्वतं महामुरुं वज्रेण वज्रिन्पर्वश
कर्तिथ । अवासृजो निवृताः सर्तवा अपः सत्रा विश्वं दधिषे केवलं सहः ॥
२२ ॥ १० ॥

॥ ५८ ॥ १–६ नोधा गौतम ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, ५ जग
२ विराड् जगती । ४ निचृज्जगती । ३ त्रिष्टुप् । ६, ७, ९ निचृत् त्रिष्टुप् । ८
राड् त्रिष्टुप् । स्वरः–१, ५, २, ४ निषादः । ३, ६–९ धैवतः ॥

॥ ५८ ॥ नू चित्सहोजा अमृतो नि तुन्दते होता यद्दूतो अभवद्विवस्वत
वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति ॥ १ ॥
स्वमद्म युवमानो अजरस्तृष्वविष्यन्नतसेषु तिष्ठति । अत्यो न पृष्ठं प्रुषितस्य रो
दिवो न सानु स्तनयन्नचिक्रदत् ॥ २ ॥ क्राणा रुद्रेभिर्वसुभिः पुरोहितो होता
षत्तो रयिषाळमर्त्यः । रथो न विक्ष्वृञ्जसान आयुषु व्यानुषग्वार्या देव ऋण
॥ ३ ॥ वि वातजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः । तृषु
दग्ने वनिनो वृषायसे कृष्णं त एम रुशदूर्मे अजर ॥ ४ ॥ तपुर्जम्भो वन आ
तचोदितो यूथे न साह्वाँ अव वाति वंसगः । अभिव्रजन्नक्षितं पाजसा रजः स
तुश्चरथं भयते पतत्रिणः ॥ ५ ॥ २३ ॥ दधुष्ट्वा भृगवो मानुषेष्वा रयिं न

थं जनेभ्यः । होतारमग्ने अतिथिं वरेण्यं मित्रं न शेवं दिव्याय जन्मने ॥ ६ ॥
ारं सप्त जुह्वो३यजिष्ठं यं वाघतो वृणते अध्वरेषु । अग्निं विश्वेषामरतिं व-
ां सपर्यामि प्रयसा यामि रत्नम् ॥ ७ ॥ अच्छिद्रा सूनो सहसो नो अद्य स्तो-
यो मित्रमहः शर्म यच्छ । अग्ने गृणन्तमंहस उरुष्योर्जो नपात्पूर्भिरायसीभिः
ः॥ भवा वरूथं गृणते विभावो भवा मघवन्मघवद्भ्यः शर्म । उरुष्याग्ने अंहसो
न्तं प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ९ ॥ २४ ॥

॥ ५९ ॥ १–७ नोधा गौतम ऋषिः ॥ अग्निर्वैश्वानरो देवता ॥ छन्दः– १ नि-
् त्रिष्टुप् । २, ४ विराट् त्रिष्टुप् । ५—७ त्रिष्टुप् । ३ पङ्क्तिः ॥ स्वरः– १,
४, ५–७ धैवतः । ३ पञ्चमः ॥

॥ ५९ ॥ वया इदग्ने अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयन्ते । वैश्वानर
भिरसि क्षितीनां स्थूणेव जनाँ उपमिद्ययन्थ ॥ १ ॥ मूर्धा दिवो नाभिरग्निः
व्या अथाभवदरती रोदस्योः । तं त्वा देवासोऽजनयन्त देवं वैश्वानर ज्यो-
दार्याय ॥ २ ॥ आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरेऽग्ना वसूनि ।
पर्वतेष्वोषधीष्वप्सु या मानुषेष्वसि तस्य राजा ॥ ३ ॥ बृहती इव सूनवे रोदसी
होता मनुष्यो३ न दक्षः । स्वर्वते सत्यशुष्माय पूर्वीर्वैश्वानराय नृतमाय
ः ॥ ४ ॥ दिवश्चित्ते बृहतो जातवेदो वैश्वानर प्र रिरिचे महित्वम् । राजा कृ-
नामसि मानुषीणां युधा देवेभ्यो वरिवश्चकर्थ ॥ ५ ॥ प्र नू महित्वं वृषभस्य
यं पूरवो वृत्रहणं सचन्ते । वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत्काष्ठा अव
रं भेत् ॥ ६ ॥ वैश्वानरो महिम्ना विश्वकृष्टिर्भरद्वाजेषु यजतो विभावा ।
वनेये शतिनीभिरग्निः पुरुणीथे जरते सूनृतावान् ॥ ७ ॥ २५ ॥

॥ ६० ॥ १–५ नोधा गौतम ऋषिः ॥ अग्निर्देवता ॥ छन्दः– १ विराट्
ुप् । ३, ५ त्रिष्टुप् । २, ४ भुरिक् पङ्क्तिः ॥ स्वरः–१, ३, ५ धैवतः । २,
ञ्चमः ॥

॥ ६० ॥ वह्निं यशसं विदथस्य केतुं सुप्राव्यं दूतं सद्योअर्थम् । द्विजन्मानं
मिव प्रशस्तं रातिं भरद्भृगवे मातरिश्वा ॥ १ ॥ अस्य शासुरुभयासः सचन्ते
ष्मन्त उशिजो ये च मर्ताः । दिवश्चित्पूर्वो न्यसादि होता पृच्छ्यो विश्पति-
 वेधाः ॥ २ ॥ तं नव्यसी हृद आ जायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः ।

यमृत्विजों वृजने मानुषासः प्रयस्वन्त आयवो जीजनन्त ॥ ३ ॥ उशिक्प
वसुर्मानुषेषु वरेण्यो होताधायि विक्षु । दमूना गृहपतिर्दम आँ अग्निर्भुवद्र
रयीणाम् ॥ ४ ॥ तं त्वां वयं पतिमग्ने रयीणां प्र शंसामो मतिभिर्गोतमा
आशुं न वाजम्भरं मर्जयन्तः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ५ ॥ २६ ॥

॥ ६१ ॥ १-१६ नोधा गौतम ऋषिः ॥ इन्द्रो देवता ॥ छन्दः-
१४, १६ विराट् त्रिष्टुप् । २, ७, ९, निचृत् त्रिष्टुप् । ३, ४, ६, ८, १०
पङ्क्तिः । ५, १५ विराट् पङ्क्तिः । ११ भुरिक् पङ्क्तिः । १३ निचृत्पङ्क्तिः । स्वर
१, १४, १६, २, ७, ९ धैवतः । ३-६, ८, १०-१३, १५ पञ्चमः ॥

॥ ६१॥ अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय । ऋ
षमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा ॥ १ ॥ अस्मा इदु प्रय इव
मि भराम्याङ्गूषं बाधे सुवृक्ति । इन्द्राय हृदा मनसा मनीषा प्रत्नाय पत्ये
मर्जयन्त ॥ २ ॥ अस्मा इदु त्यमुपमं स्वर्षां भराम्याङ्गूषमास्येन । मंहिष्ठम
क्तिभिर्मतीनां सुवृक्तिभिः सूरिं वावृधध्यै ॥ ३ ॥ अस्मा इदु स्तोमं सं हि
रथं न तष्टेव तत्सिनाय । गिरश्च गिर्वाहसे सुवृक्तीन्द्राय विश्वमिन्वं मेधि
॥ ४ ॥ अस्मा इदु सप्तिमिव श्रवस्येन्द्रायार्कं जुह्वा३ समञ्जे । वीरं दानौकसं वन्
पुरां गूर्तश्रवसं दर्माणम् ॥ ५ ॥ २७ ॥ अस्मा इदु त्वष्टा तक्षद्वज्रं स्वप
स्वर्यं१ रणाय । वृत्रस्य चिद्विदद्येन मर्म तुजन्नीशानस्तुजता कियेधाः ॥ ६
स्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना । मुषायद्विष्णुः पचतं
यान्विध्यद्वराहं तिरो अद्रिमस्ता ॥ ७ ॥ अस्मा इदु ग्नाश्चिद्देवपत्नीरिन्द्राय
हिहत्य ऊवुः । परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानं परि ष्टः ॥
अस्येदेव प्र रिरिचे महित्वं दिवस्पृथिव्याः पर्यन्तरिक्षात् । स्वराळिन्द्रो दम
विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥९॥ अस्येदेव शवसा शुषन्तं वि वृश्चद्व
वृत्रमिन्द्रः । गा न व्राणा अवनीरमुञ्चदभि श्रवो दावने सचेताः ॥ १० ॥ २
अस्येदु त्वेषसा रन्त सिन्धवः परि यद्वज्रेण सीमयच्छत् । ईशानकृद्दाशुषे दश
न्तुर्वीतये गाधं तुर्वणिः कः ॥ ११ ॥ अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्र
शानः कियेधाः । गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥ १२ ॥ अस्ये
ब्रूहि पूर्व्याणि तुरस्य कर्माणि नव्य उक्थैः । युधे यदिष्णान आयुधान्यृघायम
निरिणाति शत्रून् ॥१३॥ अस्येदु भिया गिरयश्च दृळहा द्यावा च भूमा जनुषस्तु

वेनस्य जोगुवान ओणिं सद्यो भुवद्वीर्याय नोधाः ॥ १४ ॥ अस्मा इदु
नु दाय्येषामेको यद्वव्ने भूरेरीशानः । प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमा
न्द्रः ॥ १५ ॥ एवा ते हारियोजना सुवृक्तीन्द्र ब्रह्माणि गोतमासो अक्रन् ।
विश्वपेशसं धियं धाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १६ ॥ २६ ॥ ४ ॥

॥ ६२ ॥ १—१३ नोधा गौतम ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१, ४,
विराडार्षी त्रिष्टुप् । २, ५, ६ निचृदार्षीत्रिष्टुप् । १०—१३ आर्षी त्रिष्टुप् ।
७, ८ भुरिगार्षी पङ्क्तिः । स्वरः—१, २, ४—६, ६—१३ धैवतः । ३,
८ पञ्चमः ॥

॥ ६२ ॥ प्र मन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत् । सुवृ-
भिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ॥ १ ॥ प्र वो महे महि नमो भ-
माङ्गूष्यं शवसानाय साम । येना नः पूर्वे पितरः पदज्ञा अर्चन्तो अङ्गिरसो गा
न्दन् ॥ २ ॥ इन्द्रस्याङ्गिरसां चेष्टौ विदत्सरमा तनयाय धासिम् । बृहस्पतिर्भि-
द्रिं विदद्गाः समुस्रियाभिर्वावशन्त नरः ॥ ३ ॥ स सुष्टुभा स स्तुभा सप्त विप्रैः
णाद्रिं स्वर्यो३नवग्वैः । सरण्युभिः फलिगमिन्द्र शक्र वलं रवेण दरयो द-
ः ॥ ४ ॥ गृणानो अङ्गिरोभिर्दस्म वि वरुषसा सूर्येण गोभिरन्धः । वि भूम्या
थय इन्द्र सानु दिवो रज उपरमस्तभायः ॥ ५ ॥ १ ॥ तदु प्रयक्षतममस्य कर्म
स्य चारुतममस्ति दंसः । उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्य१ श्चतस्रः
॥ द्विता वि वव्रे सनजा सनीळे अयास्यः स्तवमानेभिरर्कैः । भगो न मेने
व्योमन्धारयद्रोदसी सुदंसाः ॥ ७ ॥ सनाद्दिवं परि भूमा विरूपे पुनर्भुवा
ी स्वेभिरेवैः । कृष्णेभिरक्तोषा रुशद्भिर्वपुर्भिरा चरतो अन्यान्या ॥ ८ ॥ स-
सख्यं स्वपस्यमानः सूनुर्दाधार शवसा सुदंसाः । आमासु चिद्दधिषे पक्वम-
पयः कृष्णासु रुशद्रोहिणीषु ॥ ६ ॥ सनात्सनीळा अवनीरवाता व्रता रक्षन्ते
ताः सहोभिः । पुरू सहस्रा जनयो न पत्नीर्दुवस्यन्ति स्वसारो अह्रयाणम् ॥ १० ॥
॥ सनायुवो नमसा नव्यो अर्कैर्वसूयवो मतयो दस्म दद्रुः । पतिं न पत्नीरु-
रुशन्तं स्पृशन्ति त्वा शवसावन्मनीषाः ॥ ११ ॥ सनादेव तव रायो गभस्तौ
ीयन्ते नोप दस्यन्ति दस्म । द्युमाँ असि क्रतुमाँ इन्द्र धीरः शिक्षा शचीव-
नः शचीभिः ॥ १२ ॥ सनायते गोतम इन्द्र नव्यमतक्षद्ब्रह्म हरियोजनाय ।
थाय नः शवसान नोधाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १३ ॥ ३ ॥

॥ ६३ ॥ १—६ नोधा गौतम ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१,
भुरिगार्षी पङ्क्तिः। ३ विराट् पङ्क्तिः। २,४ विराट् त्रिष्टुप्। ५ भुरि
जगती। ६ स्वराडार्षी बृहती ॥ स्वरः—१, ७—६, ३ पञ्चमः। २, ४
तः ५ निषादः। ६ मध्यमः ॥

॥ ६३ ॥ त्वं म॒हाँ इ॑न्द्र॒ यो ह॒ शुष्मै॒र्द्यावा॑ जज्ञा॒नः पृ॑थि॒वी अमे॑ धाः। यद्ध॑ ते॒
गि॒रय॑श्चि॒द्भ्वा॑ भि॒या दृ॒ळ्हासः॑ कि॒रणा॒ नैज॑न् ॥ १ ॥ आ यद्धरी॑ इन्द्र॒ विव्र॑ता॒
वज्रं॑ जरि॒ता बा॒ह्वोर्धा॑त्। येना॑विहर्यतक्रतो अ॒मित्रा॒न्पुर॑ इ॒ष्णासि॑ पुरुहूत पू॒र्वीः ॥
त्वं स॒त्य इ॑न्द्र धृ॒ष्णुरे॒तान्त्वमृ॑भु॒क्षा नर्य॒स्त्वं षाट्। त्वं शुष्णं॑ वृ॒जने॑ पृ॒क्ष
यू॒ने कुत्सा॑य द्यु॒मते॒ सचा॑हन् ॥ ३ ॥ त्वं ह॒ त्यदि॑न्द्र॒ चोदीः॒ सखा॑ वृ॒त्रं यद्
न्वृ॑षकर्मन्नु॒भ्नाः। यद्ध॑ शूर वृषमणः परा॒चैर्वि दस्यूँ॒र्योना॒वकृ॑तो वृथा॒षाट् ॥
त्वं ह॒ त्यदि॑न्द्रा॒रिष॑ण्यन्दृ॒ळ्हस्य॑ चि॒न्मर्ता॑ना॒मजु॑ष्टौ। व्य१॒॑स्मदा काष्ठा॒ अर्व॑
र्घ॒नेव॑ वज्रिञ्छ्नथि॒ह्यमित्रा॑न् ॥ ५ ॥ ४ ॥ त्वां ह॒ त्यदि॑न्द्रा॒र्णसा॑तौ॒ स्व॑र्मीळ्
आ॒जा हव॑न्ते। तव॑ स्वधाव इ॒यमा स॑म॒र्य ऊ॒तिर्वाजे॑ष्वत॒साय्या॑ भूत् ॥ ६
ह॒ त्यदि॑न्द्र स॒प्त युध्य॒न्पुरो॑ वज्रिन्पुरु॒कुत्सा॑य दर्दः। ब॒र्हिर्न यत्सु॒दासे॒ वृथा॒
रा॑ज॒न्वरि॑वः पू॒रवे॑ कः ॥ ७ ॥ त्वं त्यां न॑ इन्द्र देव चि॒त्रामिष॒मापो॒ न पी॑प
रि॑ज्मन्। यया॑ शूर॒ प्रत्य॒स्मभ्यं॒ यंसि॒ त्मन॒मूर्जं॒ न वि॒श्वध॒ क्षर॑ध्यै ॥ ८ ॥
रि त इन्द्र॒ गोत॑मेभि॒र्ब्रह्मा॒ण्योक्ता॒ नम॑सा॒ हरि॑भ्याम्। सु॒पेश॑सं॒ वाज॒मा भ॑रा न
त॒र्म॑क्षू धि॒याव॑सुर्जगम्यात् ॥ ६ ॥ ५ ॥

॥ ६४ ॥ १—१५ नोधा गौतम ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१,
६ विराड् जगती। २, ३, ५, ७, १०—१३ निचृज्जगती। ८, १४ जगती
निचृत्त्रिष्टुप् ॥ स्वरः—१—१४ निषादः। १५ धैवतः ॥

॥ ६४ ॥ वृष्णे॒ शर्धा॑य॒ सुम॑खाय वे॒धसे॒ नोधः॑ सुवृ॒क्तिं प्र भ॑रा म॒रुद्भ्
अ॒पो न धीरो॒ मन॑सा सु॒हस्त्यो॒ गिरः॒ सम॑ञ्जे वि॒दथे॑ष्वा॒भुवः॑ ॥ १ ॥ ते
दि॒व ऋ॒ष्वास॑ उ॒क्षणो॑ रु॒द्रस्य॒ मर्या॒ असु॑रा अरे॒पसः॑। पा॒व॒कासः॒ शुच॑यः
इ॒व सत्वा॑नो॒ न द्र॒प्सिनो॑ घो॒रव॑र्पसः ॥ २ ॥ युवा॑नो रु॒द्रा अ॒जरा॑ अभो॒ग्घनो
व॒क्षुरध्रि॑गावः॒ पर्व॑ता इव। दृ॒ळ्हा चि॒द्विश्वा॒ भुव॑नानि॒ पार्थि॑वा॒ प्र च्याव॑यन्ति
व्यानि॑ म॒ज्मना॑ ॥ ३ ॥ चि॒त्रैर॒ञ्जिभि॒र्वपु॑षे॒ व्य॑ञ्जते॒ वक्षः॑सु रु॒क्माँ अधि॑
शुभे। अंसे॑ष्वेषां॒ नि मि॑मृक्षुरृ॒ष्टयः॑ सा॒कं ज॑ज्ञिरे स्व॒धया॑ दि॒वो नरः॑ ॥

ानकृतो धुनयो रिशादसो वातान्विद्युतस्तविषीभिरक्रत। दुहन्त्यूधर्दिव्यानि धू-
ी भूमिं पिन्वन्ति पयसा परिज्रयः॥५॥६॥ पिन्वन्त्यपो मरुतः सुदानवः
ो घृतवद्विदथेष्वाभुवः। अत्यं न मिहे वि नयन्ति वाजिनमुत्सं दुहन्ति स्तनयन्तम-
तम्॥६॥ महिषासो मायिनश्चित्रभानवो गिरयो न स्वतवसो रघुष्यदः। मृगा
हस्तिनः खादथा वना यदारुणीषु तविषीरयुग्ध्वम्॥७॥ सिंहा इव नानदति
ेतसः पिशा इव सुपिशो विश्ववेदसः। क्षपो जिन्वन्तः पृषतीभिर्ऋष्टिभिः समि-
बाधः शवसाहिमन्यवः॥८॥ रोदसी आ वदता गणश्रियो नृषाचः शूराः
साहिमन्यवः। आ वन्धुरेष्वमतिर्न दर्शता विद्युन्न तस्थौ मरुतो रथेषु वः॥९॥
श्ववेदसो रयिभिः समोकसः संमिश्लासस्तविषीभिर्विरप्शिनः। अस्तार इषुं
धेरे गभस्त्योरनन्तशुष्मा वृषखादयो नरः॥१०॥७॥ हिरण्ययेभिः पविभिः
ोवृध उज्जिघ्नन्त आपथ्यो३ न पर्वतान्। मखा अयासः स्वसृतो ध्रुवच्युतो दुध्र-
ो मरुतो भ्राजदृष्टयः॥११॥ घृषुं पावकं वनिनं विचर्षणिं रुद्रस्य सूनुं हवसा
ामसि। रजस्तुरं तवसं मारुतं गणमृजीषिणं वृषणं सश्चत श्रिये॥१२॥ प्र
स मर्तः शवसा जनाँ अति तस्थौ व ऊती मरुतो यमावत। अर्वद्भिर्वाजं भरते
ा नृभिरापृच्छ्यं क्रतुमा क्षेति पुष्यति॥१३॥ चर्कृत्यं मरुतः पृत्सु दुष्टरं
न्तं शुष्मं मघवत्सु धत्तन। धनस्पृतमुक्थ्यं विश्वचर्षणिं तोकं पुष्येम तनयं शतं
ाः॥१४॥ नू ष्ठिरं मरुतो वीरवन्तमृतीषाहं रयिमस्मासु धत्त। सहस्रिणं
तिनं शूशुवांसं प्रातर्मक्षू धियावसुर्जगम्यात्॥१५॥८॥११॥

॥६५॥ १—५ पराशर ऋषिः॥ अग्निर्देवता॥ छन्दः—१—३, ५
चृत्पङ्क्तिः। ४ विराट् पङ्क्तिः॥ पञ्चमः स्वरः॥

॥६५॥ पश्वा न तायुं गुहा चतन्तं नमो युजानं नमो वहन्तम्। सजोषा धीराः
रन्नु ग्मन्नुप त्वा सीदन्विश्वे यजत्राः॥१॥ ऋतस्य देवा अनु व्रता गुर्भुवत्प-
ष्टिर्द्यौर्न भूम। वर्धन्तीमापः पन्वा सुशिश्विमृतस्य योना गर्भे सुजातम्॥२॥पु-
र्न रण्वा क्षितिर्न पृथ्वी गिरिर्न भुज्म क्षोदो न शंभु। अत्यो नाज्मन्त्सर्गप्रतक्तः
न्धुर्न क्षोदः क ईं वराते॥३॥ जामिः सिन्धूनां भ्रातेव स्वस्रामिभ्यान्न राजा
ान्यत्ति। यद्वातजूतो वना व्यस्थादग्निर्ह दाति रोमा पृथिव्याः॥४॥ श्वसि-
प्सु हंसो न सीदन् क्रत्वा चेतिष्ठो विशामुषर्भुत्। सोमो न वेधा ऋतप्रजातः
शुर्न शिश्वा विभुर्दूरेभाः॥५॥९॥

॥ ६६ ॥ १—५ पराशरः शाक्त्य ऋषिः ॥ अग्निर्देवता ॥ छन्दः—
पङ्क्तिः । २ भुरिक् पङ्क्तिः । ३ निचृत्पङ्क्तिः । ४, ५ विराट् पङ्क्तिः ॥ पञ्चमः स्वर

॥ ६६ ॥ रयिर्न चित्रा सूरो न संदृगायुर्न प्राणो नित्यो न सूनुः । तक्
भूर्णिर्वना सिषक्ति पयो न धेनुः शुचिर्विभावा ॥ १ ॥ दाधार क्षेममोको न र
यवो न पक्वो जेता जनानाम् । ऋषिर्न स्तुभ्वा विक्षु प्रशस्तो वाजी न प्रीतो
दधाति ॥ २ ॥ दुरोकशोचिः क्रतुर्न नित्यो जायेव योनावरं विश्वस्मै । चित्रो
दस्राट् श्वेतो न विक्षु रथो न रुक्मी त्वेषः समत्सु ॥ ३ ॥ सेनेव सृष्टामं दधात्यस
विद्युत्त्वेषप्रतीका । यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥ ४
वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् । सिन्धुर्न क्षोदः प्र नीचीरै
नवन्त गावः स्वर्दृशीके ॥ ५ ॥ १० ॥

॥ ६७ ॥ १—५ पराशरः शाक्त्य ऋषिः ॥ अग्निर्देवता ॥ छन्दः—
पङ्क्तिः । २ भुरिक् पङ्क्तिः । ३ निचृत्पङ्क्तिः । ४, ५ विराट् पङ्क्तिः ॥ पञ्चमः स्वर

॥ ६७ ॥ वनेषु जायुर्मर्तेषु मित्रो वृणीते श्रुष्टिं राजेवाजुर्यम् । क्षेमो न स
क्रतुर्न भद्रो भुवत्स्वाधीर्होता हव्यवाट् ॥ १ ॥ हस्ते दधानो नृम्णा विश्वा
देवान्धाद्गुहा निषीदन् । विदन्तीमत्र नरो धियन्धा हृदा यत्तष्टान्मन्त्राँ अशंसन् ॥
अजो न क्षां दाधार पृथिवीं तस्तम्भ द्यां मन्त्रेभिः सत्यैः । प्रिया पदानि प
नि पाहि विश्वायुरग्ने गुहा गुहं गाः ॥ ३ ॥ य ईं चिकेत गुहा भवन्तमा यः स
धारामृतस्य । वि ये चृतन्त्यृता सपन्त आदिद्वसूनि प्र ववाचास्मै ॥ ४ ॥ वि
वीरुत्सु रोधन्महित्वोत प्रजा उत प्रसूष्वन्तः । चित्तिरपां दमे विश्वायुः सद्मेव
राः संमाय चक्रुः ॥ ५ ॥ ११ ॥

॥ ६८ ॥ १—५ पराशरः शाक्त्य ऋषिः ॥ अग्निर्देवता ॥ छन्दः—
४ निचृत् पङ्क्तिः । २, ३, ५ पङ्क्तिः ॥ पञ्चमः स्वरः ॥

॥ ६८ ॥ श्रीणन्नुप स्थाद्दिवं भुरण्युः स्थातुश्चरथमक्तून्व्यूर्णोत् । परि
षामेको विश्वेषां भुवद्देवो देवानां महित्वा ॥ १ ॥ आदित्ते विश्वे क्रतुं जुषन्त शुष्काद
जीवो जनिष्ठाः । भजन्त विश्वे देवत्वं नाम ऋतं सपन्तो अमृतमेवैः ॥ २ ॥
तस्य प्रेषा ऋतस्य धीतिर्विश्वायुर्विश्वे अपांसि चक्रुः । यस्तुभ्यं दाशाद्यो वा
शिक्षात्तस्मै चिकित्वान्रयिं दयस्व ॥ ३ ॥ होता निषत्तो मनोरपत्ये स चिन्न

ं पतीं र॒यी॒णां । इ॒च्छन्त॒ रेतो॒ मि॒थस्त॒नूषु॒ सं जा॑नत॒ स्वैर्दक्षै॒रमू॑राः ॥ ४ ॥
तु॒र्न पु॒त्राः क्रतुं॑ जुषन्त॒ श्रोष॒न्ये अ॑स्य॒ शासं॑ तु॒रासः॑ । वि राय॑ और्णो॒द्दुरः॑ पु-
तुः पि॒पेश॒ नाकं॑ स्तृ॒भि॒र्दमू॑नाः ॥ ५ ॥ १२ ॥

॥ ६९ ॥ १-५ पराशरः शक्तिपुत्र ऋषिः ॥ अग्निर्देवता ॥ छन्दः—१ प-
ः।२,३ निचृत्पङ्क्तिः । ४ भुरिक्पङ्क्तिः । ५ विराट्पङ्क्तिः॥ १—५ पञ्चमः स्वरः ॥

॥ ६९ ॥ शु॒क्रः शु॑शु॒क्वाँ उ॒षो न जा॒रः प॒प्रा स॑मी॒ची दि॒वो न ज्योतिः॑ ।
ऐ प्रजा॑तः॒ क्रत्वा॑ बभूथ॒ भुवो॑ दे॒वानां॑ पि॒ता पु॒त्रः सन् ॥ १ ॥ वे॒धा अदृ॑प्तो अ॒-
र्वि॑जा॒नन्नूध॒र्न गोनां॒ स्वाद्मा॑ पितू॒नाम् । जने॒ न शेव॑ आ॒हूर्यः॒ सन्मध्ये॒ निष॑त्तो
वो दु॑रो॒णे ॥ २ ॥ पु॒त्रो न जा॒तो र॒ण्वो दु॑रो॒णे वा॒जी न प्री॒तो विशो॒ वि
रीत् । विशो॒ यदह्वे॒ नृभिः॒ सनी॑ळा अ॒ग्निर्दे॑व॒त्वा विश्वा॑न्यश्याः ॥ ३ ॥ नकि॑ष्ट
ा व्र॒ता मि॑नन्ति॒ नृभ्यो॒ यदे॒भ्यः श्रु॒ष्टिं च॒कर्थ॑ । तत्तु॒ ते॒ दंसो॒ यदह॑न्त्स॒मानै॒र्नृ-
र्यद्यु॒क्तो वि॒वे रपां॑सि ॥ ४ ॥ उ॒षो न जा॒रो वि॒भावो॒स्रः सञ्ज्ञा॑तरूप॒श्चिके॑तदस्मै ।
ना॒ वह॑न्तो॒ दुरो॒ व्यृ॑ण्व॒न्नव॑न्त॒ विश्वे॒ स्व॒१॒॑र्दृशी॑के ॥ ५ ॥ १३ ॥

॥ ७० ॥ १-६ पराशरऋषिः॥ अग्निर्देवता ॥ छन्दः—१, ४ विराट्पङ्क्तिः ।
पङ्क्तिः । ३, ५ निचृत् पङ्क्तिः । ६ याजुषी पङ्क्तिः ॥ १—६ पञ्चमः स्वरः ॥

॥ ७० ॥ व॒नेम॑ पू॒र्वीर॒र्यो म॑नी॒षा अ॒ग्निः सु॒शोको॒ विश्वा॑न्यश्याः । आ दै॒-
ानि व्र॒ता चि॑कि॒त्वाना मानु॑षस्य॒ जन॑स्य॒ जन्म॑ ॥ १ ॥ गर्भो॒ यो अ॒पां गर्भो॒
ाना॒ं गर्भ॑श्च स्था॒तां गर्भ॑श्च॒रथा॑म् । अद्रौ॑ चिदस्मा अ॒न्तर्दु॑रो॒णे वि॒शां न वि-
ो अ॒मृतः॑ स्वा॒धीः ॥ २ ॥ स हि क्ष॒पावाँ॑ अ॒ग्नी र॑यी॒णां दाश॒द्यो अ॑स्मा अरं॑
क्तैः । ए॒ता चि॑कित्वो॒ भूमा॒ नि पा॑हि दे॒वानां॒ जन्म॒ मर्तां॑श्च वि॒द्वान् ॥ ३ ॥
र्न्यं पू॒र्वीः क्ष॒पो विरू॑पाः स्था॒तुश्च॒ रथ॑मृतप्र॑वीतम् । अरा॑धि॒ होता॒ स्व॒१॒॑र्निष॑त्तः
ण्वन्विश्वा॑न्यपां॑सि स॒त्या ॥ ४ ॥ गोषु॒ प्रश॑स्तिं॒ वने॑षु धिषे॒ भर॑न्त॒ विश्वे॑ ब॒लिं
र्णः । वि त्वा॒ नरः॑ पुरु॒त्रा स॑पर्यन्पि॒तुर्न जिव्रे॒र्वि वेदो॑ भरन्त ॥ ५ ॥ सा॒धुर्न
ुरस्ते॑व॒ शूरो॒ यातै॑व भी॒मस्त्वे॒षः स॒मत्सु॑ ॥ ६ ॥ १४ ॥

॥ ७१ ॥ १-१० पराशर ऋषिः ॥ अग्निर्देवता॥ छन्दः-१, ६, ७ त्रि-
् २, ५ निचृत् त्रिष्टुप् । ३, ४, ८, १० विराट् त्रिष्टुप् । ९ भुरिक्पङ्क्तिः ॥
रः-१-८, १० धैवतः । ९ पञ्चमः ॥

॥ ७१ ॥ उप प्र जिन्वन्नुशतीरुशन्तं पतिं न नित्यं जनयः सनीळाः । सारः श्यावीमरुषीमजुषञ्चित्रमुच्छन्तीमुषसं न गावः ॥ १ ॥ वीळु चिद्दृळ्हा तरो न उक्थैरद्रिं रुजन्नङ्गिरसो रवेण । चक्रुर्दिवो बृहतो गातुमस्मे अहः स्व विदुः केतुमुस्राः ॥ २ ॥ दधन्नृतं धनयन्नस्य धीतिमादिदर्यो दिधिष्वो विभृत्र अतृष्यन्तीरपसो यन्त्यच्छा देवाञ्जन्म प्रयसा वर्धयन्तीः ॥ ३ ॥ मथीद्यदीं भृतो मातरिश्वा गृहेगृहे श्येतो जेन्यो भूत् । आदीं राज्ञे न सहीयसे सचा स दूत्यं भृगवाणो विवाय ॥ ४ ॥ महे यत्पित्र ईं रसं दिवे करव त्सरत्पृशन्य कित्वान् । सृजदस्ता धृषता दिद्युमस्मै स्वायां देवो दुहितरि त्विषिं धात् ॥ १५ ॥ स्व आ यस्तुभ्यं दम आ विभाति नमो वा दाशादुशतो अनु द्यून् । अग्ने वयो अस्य द्विबर्हा यासद्राया सरथं यं जुनासि ॥ ६ ॥ अग्निं विश्वा भि पृक्षः सचन्ते समुद्रं न स्रवतः सप्त यह्वीः । न जामिभिर्वि चिकिते वयो विदा देवेषु प्रमतिं चिकित्वान् ॥ ७ ॥ आ यदिषे नृपतिं तेज आनट् शुचि निषिक्तं द्यौरभीके । अग्निः शर्धमनवद्यं युवानं स्वाध्यं जनयत्सूदयच्च ॥ ८ मनो न योऽध्वनः सद्य एत्येकः सत्रा सूरो वस्व ईशे । राजाना मित्रावरुणा पाणी गोषु प्रियममृतं रक्षमाणा ॥ ९ ॥ मा नो अग्ने सख्या पित्र्याणि प्र म ष्ठा अभि विदुष्कविः सन् । नभो न रूपं जरिमा मिनाति पुरा तस्या अभिश रधीहि ॥ १० ॥ १६ ॥

॥ ७२ ॥ १–१० पराशर ऋषिः । अग्निर्देवता ॥ छन्दः–१, २, ५, ६ विराट् त्रिष्टुप् । ४, १० त्रिष्टुप् । ७ निचृत् त्रिष्टुप् । ३, ८ भुरिक्पङ्क्तिः स्वरः–१, २, ४—७, ६, १० धैवतः । ३, ८ पञ्चमः ॥

॥ ७२ ॥ नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो नर्या पुरूणि । अ भुवद्रयिपती रयीणां सत्रा चक्राणो अमृतानि विश्वा ॥ १ ॥ अस्मे वत्सं षन्तं न विन्दन्निच्छन्तो विश्वे अमृता अमूराः । श्रमयुवः पदव्यो धियंधास्त पदे परमे चार्वग्नेः ॥ २ ॥ तिस्रो यदग्ने शरदस्त्वामिच्छुचिं घृतेन शुचयः पर्यान् । नामानि चिद्दधिरे यज्ञियान्यसूदयन्त तन्वः सुजाताः ॥ ३ ॥ आ दसी बृहती वेविदानाः प्र रुद्रिया जभ्रिरे यज्ञियासः । विदन्मर्तो नेमधिता चि त्वानग्निं पदे परमे तस्थिवांसम् ॥ ४ ॥ संजानाना उप सीदन्नभिज्ञु पत्नीवन्तो नम नमस्यन् । रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणाः ॥ ५ १७ ॥ त्रिः सप्त यद्गुह्यानि त्वे इत्पदाविदन्निहिता यज्ञियासः । तेभी रक्षन्ते

सजोषाः पशूञ्च स्थातृञ्चरथं च पाहि ॥६॥ विद्वाँ अग्ने वयुनानि क्षितीनां
नुषक् शुरुधो जीवसे धाः । अन्तर्विद्वाँ अध्वनो देवयानानतन्द्रो दूतो अभवो
र्वाट् ॥ ७ ॥ स्वाध्यो दिव आ सप्त यह्वी रायो दुरो व्यृतज्ञा अजानन् । वि-
व्यं सरमा दृळ्हमूर्वं येना नु कं मानुषी भोजते विट् ॥ ८ ॥ आ ये विश्वा
त्यानि तस्थुः कृण्वानासो अमृतत्वाय गातुम् । मह्ना महद्भिः पृथिवी वि तस्थे
। पुत्रैरदितिर्धायसे वेः ॥ ९ ॥ अधि श्रियं नि दधुश्चारुमस्मिन्दिवो यदक्षी
ता अकृण्वन् । अध क्षरन्ति सिन्धवो न सृष्टाः प्र नीचीरग्ने अरुषीरजानन्
१० ॥ १८ ॥

॥ ७३ ॥ १—१० पराशर ऋषिः ॥ अग्निर्देवता ॥ छन्दः—१, २, ४,
७, ९, १० निचृत्त्रिष्टुप् । ३, ६ त्रिष्टुप् । ८ विराट्त्रिष्टुप् ॥ १–१० धैवतः स्वरः ॥

॥ ७३ ॥ रयिर्न यः पितृवित्तो वयोधाः सुप्रणीतिश्चिकितुषो न शासुः ।
नशीरतिथिर्न प्रीणानो होतेव सद्म विधतो वि तारीत् ॥ १ ॥ देवो न यः
वेता सत्यमन्मा क्रत्वा निपाति वृजनानि विश्वा । पुरुप्रशस्तो अमतिर्न सत्य
त्मेव शेवो दिधिषाय्यो भूत् ॥ २ ॥ देवो न यः पृथिवीं विश्वधाया उपक्षेति
मित्रो न राजा । पुरः सदः शर्मसदो न वीरा अनवद्या पतिजुष्टेव नारी ॥ ३ ॥
त्वा नरो दम आ नित्यमिद्धमग्ने सचन्त क्षितिषु ध्रुवासु । अधि द्युम्नं नि द-
र्भूस्मिन्भवा विश्वायुर्धरुणो रयीणाम् ॥ ४ ॥ वि पृक्षो अग्ने मघवानो
युर्वि सूरयो ददतो विश्वमायुः । सनेम वाजं समिथेष्वर्यो भागं देवेषु श्रवसे
नाः ॥ ५ ॥ १९ ॥ ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीपयन्त द्युभक्ताः ।
वतः सुमतिं भिक्षमाणा वि सिन्धवः समया सस्रुरद्रिम् ॥ ६ ॥ त्वे अग्ने सु-
भिक्षमाणा दिवि श्रवो दधिरे यज्ञियासः । नक्ता च चक्रुरुषसा विरूपे कृष्णं च
मरुणं च सं धुः ॥ ७ ॥ यान्राये मर्तान्त्सुषूदो अग्ने ते स्याम मघवानो वयं
छायेव विश्वं भुवनं सिसक्ष्यापप्रिवान्रोदसी अन्तरिक्षम् ॥ ८ ॥ अर्वद्भिरग्ने
तो नृभिर्नृन्वीरैर्वीरान्वनुयामा त्वोताः । ईशानासः पितृवित्तस्य रायो वि सूरयः
हिमा नो अश्युः ॥ ९ ॥ एता ते अग्न उचथानि वेधो जुष्टानि सन्तु मनसे हृदे
शकेम रायः सुधुरो यमं तेऽधि श्रवो देवभक्तं दधानाः ॥ १० ॥ २० ॥ १२ ॥

॥ ७४ ॥ १–९ गोतमो राहूगण ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, २, ८,
निचृद्गायत्री । ३, ५, ६ गायत्री । ४, ७ विराड्गायत्री ॥ १–९ षड्जः स्वरः ॥

॥ ७४ ॥ उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृ
॥ १ ॥ यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु । अरक्षद्दाशुषे गयम् ॥
उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनञ्जयो रणेरणे ॥ ३ ॥ यस्य दूतो
सि क्षये वेषि हव्यानि वीतये । दस्मत्कृणोष्यध्वरम् ॥ ४ ॥ तमित्सुहव्यम
सुदेवं सहसो यहो । जना आहुः सुबर्हिषम् ॥ ५ ॥ २१ ॥ आ च वहासि
इह देवाँ उप प्रशस्तये । हव्या सुश्चन्द्र वीतये ॥ ६ ॥ न योरुपब्दिरश्व्यः श
रथस्य कच्चन । यदग्ने यासि दूत्यम् ॥ ७ ॥ त्वोतो वाज्यह्रयोऽभि पूर्वस्मादप
प्र दाश्वाँ अग्ने अस्थात् ॥ ८ ॥ उत द्युमत्सुवीर्यं बृहदग्ने विवाससि । देवे
देव दाशुषे ॥ ९ ॥ २२ ॥

॥ ७५ ॥ १–५ गोतमो राहूगण ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१ ग
त्री २, ४, ५ निचृद्गायत्री । ३ विराड् गायत्री ॥ १–५ षड्जः स्वरः ॥

॥ ७५ ॥ जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् । हव्या जुह्वान आसनि ॥
अथा ते अङ्गिरस्तमाग्ने वेधस्तम प्रियम् । वोचेम ब्रह्म सानसि ॥ २ ॥ कस्ते
मिर्जनानामग्ने को दाश्वध्वरः । को ह कस्मिन्नसि श्रितः ॥ ३ ॥ त्वं जामिर्ज
नामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यः ॥ ४ ॥ यजा नो मित्राव
यजा देवाँ ऋतं बृहत् । अग्ने यक्षि स्वं दमम् ॥ ५ ॥ २३ ॥

॥ ७६ ॥ १–५ गोतमो राहूगण ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१,
निचृत् त्रिष्टुप् । २, ५ विराट् त्रिष्टुप् ॥ १–५ धैवतः स्वरः ॥

॥ ७६ ॥ का त उपेतिर्मनसो वराय भुवदग्ने शंतमा का मनीषा । को
यज्ञैः परि दक्षं त आप केन वा ते मनसा दाशेम ॥ १ ॥ एह्यग्न इह होता
षीदादब्धः सु पुरएता भवा नः । अवतां त्वा रोदसी विश्वमिन्वे यजा महे
मनसाय देवान् ॥ २ ॥ प्र सु विश्वान्रक्षसो धक्ष्यग्ने भवा यज्ञानामभिश
पावा । अथा वह सोमपतिं हरिभ्यामातिथ्यमस्मै चकृमा सुदाव्ने ॥ ३ ॥ प्रजावता
वचसा वह्निरासा च हुवे नि च सत्सीह देवैः । वेषि होत्रमुत पोत्रं यजत्र
प्रयन्तर्जनितर्वसूनाम् ॥ ४ ॥ यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः क
कविः सन् । एवा होतः सत्यतर त्वमद्याग्ने मन्द्रया जुह्वा यजस्व ॥ ५ ॥ २

॥ ७७ ॥ १–५ गोतमो राहूगण ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१ नि
ङ्क्तिः । २ निचृत्त्रिष्टुप् । ३, ५ विराट् त्रिष्टुप् ॥ स्वरः–१ पञ्चमः । २–५ धैव

॥ ७७ ॥ कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने गीः । यो मर्त्ये-
ते ऋतावा होता यजिष्ठ इत्कृणोति देवान् ॥ १ ॥ यो अध्वरेषु शंतम ऋ-
होता तमू नमोभिरा कृणुध्वम् । अग्निर्यद्वेर्मर्ताय देवान्त्स चा बोधाति म-
यजाति ॥ २ ॥ स हि क्रतुः स मर्यः स साधुर्मित्रो न भूदद्भुतस्य रथीः ।
धेषु प्रथमं देवयन्तीर्विश उप ब्रुवते दस्ममारीः ॥ ३ ॥ स नो नृणां नृतमो
दा अग्निर्गिरोऽवसा वेतु धीतिम् । तना च ये मघवानः शविष्ठा वाजप्रसूता
न्त मन्म ॥ ४ ॥ एवाग्निर्गोतमेभिर्ऋतावा विप्रेभिरस्तोष्ट जातवेदाः । स
द्युम्नं पीपयत्स वाजं स पुष्टिं याति जोषमा चिकित्वान् ॥ ५ ॥ २५ ॥

॥ ७८ ॥ १—५ गोतमो राहूगण ऋषिः ॥ अग्निर्देवता ॥ १—५ गायत्री
ः ॥ षड्जः स्वरः ॥

॥ ७८ ॥ अभि त्वा गोतमा गिरा जातवेदो विचर्षणे । द्युम्नैरभि प्र णोनु-
॥ १ ॥ तमु त्वा गोतमो गिरा रायस्कामो दुवस्यति । द्युम्नैरभि प्र णोनुमः
॥ तमु त्वा वाजसातममङ्गिरस्वद्धवामहे । द्युम्नैरभि प्र णोनुमः ॥ ३ ॥ तमु
वृत्रहन्तमं यो दस्यूँरवधूनुषे द्युम्नैरभि प्र णोनुमः ॥ ४ ॥ अवोचाम रहूगणा
ये मधुमद्वचः । द्युम्नैरभि प्र णोनुमः ॥ ५ ॥ २६ ॥

॥ ७९ ॥ १—१२ गोतमो राहूगण ऋषिः ॥ अग्निर्देवता ॥ छन्दः—१
द् त्रिष्टुप् २, ३ निचृत् त्रिष्टुप् । ४ आर्ष्युष्णिक् । ५, ६ निचृदार्ष्युष्णिक् ।
८, १०, ११ निचृद्गायत्री । ९, १२ गायत्री ॥ स्वरः—१—३ धैवतः ।
–६ ऋषभः । ७—१२ षड्जः ॥

॥ ७९ ॥ हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् । शुचिभ्राजा
सो नवेदा यशस्वतीरपस्युवो न सत्याः ॥ १ ॥ आ ते सुपर्णा अमिनन्तँ एवैः
गो नोनाव वृषभो यदीदन् । शिवाभिर्न स्मयमानाभिरागात्पतन्ति मिहः स्तन-
यभ्रा ॥ २ ॥ यदीमृतस्य पयसा पियानो नयन्नृतस्य पथिभी रजिष्ठैः । अ-
मित्रो वरुणः परिज्मा त्वचं पृञ्चन्त्युपरस्य योनौ ॥ ३ ॥ अग्ने वाजस्य गो-
ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः ॥ ४ ॥ स इधानो व-
कविरग्निरीळेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ ५ ॥ क्षपो राजन्नुत
ाग्ने वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रति ॥ ६ ॥ २७ ॥ अवा नो
ऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासु धीषु वन्द्य ॥ ७ ॥ आ नो अग्ने रयिं

भर सत्रासाहं वरेण्यं । विश्वासु पृत्सु दुष्टरम् ॥ ८ ॥ आ नो अग्ने सुचेतुना
विश्वायुपोषसम् । मार्डीकं धेहि जीवसे ॥ ९ ॥ प्र पूतास्तिग्मशोचिषे वाचो
तमाग्नये । भरस्व सुम्नयुर्गिरः ॥ १० ॥ यो नो अग्नेऽभिदासत्यन्ति दूरे प
सः । अस्माकमिद्वृधे भव ॥ ११ ॥ सहस्राक्षो विचर्षणिरग्नी रक्षांसि सेध
होता गृणीत उक्थ्यः ॥ १२ ॥ २८ ॥

॥ ८० ॥ १—१६ गोतमो राहूगण ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—
११ निचृदास्तारपङ्क्तिः । ५, ६, ९, १०, १३ १४ विराट्पङ्क्तिः । २–४, ७,
१५ भुरिग् बृहती ८, १६ बृहती ॥ स्वरः—१, ११, ५, ६, ९, १०, १३,
पञ्चमः । २—४, ७, १२, १५, ८, १६ मध्यमः ॥

॥ ८० ॥ इत्था हि सोम इन्मदे ब्रह्मा चकार वर्धनम् । शविष्ठ वज्रिन्नो
पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम् ॥ १ ॥ स त्वामदद्वृषा मदः स
श्येनाभृतः सुतः । येना वृत्रं निरद्भ्यो जघन्थ वज्रिन्नोजसार्चन्ननु स्वराज्यम् ॥
प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते । इन्द्र नृम्णं हि ते शवो हनो वृत्रं
अपोऽर्चन्ननु स्वराज्यम् ॥ ३ ॥ निरिन्द्र भूम्या अधि वृत्रं जघन्थ निर्दिवः । सृज
रुत्वतीरव जीवधन्या इमा अपोऽर्चन्ननु स्वराज्यम् ॥ ४ ॥ इन्द्रो वृत्रस्य दो
सानुं वज्रेण हीळितः । अभिक्रम्याव जिघ्नतेऽपः सर्माय चोदयन्नर्चन्ननु स
ज्यम् ॥ ५ ॥ २९ ॥ अधि सानौ नि जिघ्नते वज्रेण शतपर्वणा । मन्दान
अन्धसः सखिभ्यो गातुमिच्छत्यर्चन्ननु स्वराज्यम् ॥ ६ ॥ इन्द्र तुभ्यमिदद्रिवो
वज्रिन्वीर्यम् । यद्ध त्यं मायिनं मृगं तमु त्वं माययावधीरर्चन्ननु स्वराज्यम् ॥ ७ ॥
वज्रासो अस्थिरन्नवतिं नाव्या अनु । महत्त इन्द्र वीर्यं बाह्वोस्ते बलं हितमर्चन्ननु
राज्यम् ॥ ८ ॥ सहस्रं साकमर्चत परि ष्टोभत विंशतिः । शतैनमन्वनोनवुरिन्द्राय
ह्मोद्यतमर्चन्ननु स्वराज्यम् ॥ ९ ॥ इन्द्रो वृत्रस्य तविषीं निरहन्त्सहसा सहः । महत्त
पौंस्यं वृत्रं जघन्वाँ असृजदर्चन्ननु स्वराज्यम् ॥ १० ॥ ३० ॥ इमे चित्तव मन्यवे
भियसा मही । यदिन्द्र वज्रिन्नोजसा वृत्रं मरुत्वाँ अवधीरर्चन्ननु स्वराज्यम् ॥
न वेपसा न तन्यतेन्द्रं वृत्रो वि बीभयत् । अभ्येनं वज्र आयसः सहस्रभृष्टि
तार्चन्ननु स्वराज्यम् ॥ १२ ॥ यद्वृत्रं तव चाशनिं वज्रेण समयोधयः । अहिं
जिघांसतो दिवि ते बद्बधे शवोऽर्चन्ननु स्वराज्यम् ॥ १३ ॥ अभिष्टने ते
द्रिवो यत्स्था जगच्च रेजते । त्वष्टा चित्तव मन्यव इन्द्र वेविज्यते भियार्चन्ननु

र्ज्यम् ॥ १४ ॥ नुहि नु यादंधीमसीन्द्रं को वीर्यां परः । तस्मिन्नृम्णमुत क्रतुं
ा ओजांसि सं दधुरर्चन्ननु स्वराज्यम् ॥ १५ ॥ यामथर्वा मनुष्पिता दध्यङ्
ग्रमत्नत । तस्मिन्ब्रह्माणि पूर्वथेन्द्र उक्था समंग्मतार्चन्ननु स्वराज्यम् ॥ १६ ॥
॥ ५ ॥

॥ ८१ ॥ १–६ गोतमो राहूगण ऋषिः ॥ इन्द्रोदेवता ॥ छन्दः—१, ७,
विराट् पङ्क्तिः । ३–६, ६ निचृदास्तारपङ्क्तिः । २ भुरिग् बृहती ॥ स्वरः—१,
-६ पञ्चमः । २ मध्यमः ॥

॥ ८१ ॥ इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः । तमिन्महत्स्वाजिषूतेमर्भे
ामहे स वाजेषु प्र नोऽविषत् ॥१॥ असि हि वीर सेन्योऽसि भूरि परादृदिः ।
सि दुभ्रस्यं चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥ २ ॥ यदुदी-
ा आजयों धृष्णवे धीयते धना । युक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽ-
ाँ इन्द्र वसौ दधः ॥ ३ ॥ क्रत्वा महाँ अनुष्वधं भीम आ वावृधे शवः । श्रिय
ृष्व उपाकयोर्नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसम् ॥ ४ ॥ आ पप्रौ पा-
र्थिवं रजो बद्बधे रोचना दिवि । न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यतेऽति
श्वं ववक्षिथ ॥ ५ ॥ १ ॥ यो अर्यो मर्तभोजनं पराददाति दाशुषे । इन्द्रो अ-
भ्यं शिक्षतु वि भजा भूरि ते वसु भक्षीय तव राधसः ॥ ६ ॥ मदेमदे हि नो
देर्यूथा गवामृजुक्रतुः सं गृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आ
र ॥ ७ ॥ मादयस्व सुते सचा शवसे शूर राधसे । विद्मा हि त्वा पुरूवसुमुप
मान्त्ससृज्महेऽथा नोऽविता भव ॥ ८ ॥ एते त इन्द्र जन्तवो विश्वं पुष्यन्ति
र्यम् । अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर॥ ६ ॥ २ ॥

॥ ८२ ॥ १–६ गोतमो राहूगण ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, ४ नि,
दास्तारपङ्क्तिः । २, ३, ५ विराडास्तारपङ्क्तिः । ६ विराड् जगती ॥ स्वरः–१–५
ञ्चमः । ६ निषादः ॥

॥ ८२ ॥ उपो षु शृणुही गिरो मघवन्मातथा इव । यदा नः सूनृतावतः
र आदर्थयास इद्योजा न्विन्द्र ते हरी ॥ १ ॥ अक्षन्नमीमदन्त ह्यव प्रिया अधू-
त । अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ २ ॥
सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि । प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु योजा

न्विन्द्र ते हरी ॥ ३ ॥ स घा तं वृषणं रथमधि तिष्ठाति गोविन्दम् । यः पा
हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥ ४ ॥ युक्तस्ते अस्तु
दक्षिण उत सव्यः शतक्रतो । तेन जायामुप प्रियां मन्दानो याह्यन्धसो योजा नि
न्द्र ते हरी ॥ ५ ॥ युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे ग
स्त्योः । उत्त्वा सुतासो रभसा अमन्दिषुः पूषण्वान्वज्रिन्त्समु पत्न्यामदः ॥६॥ ३

॥ ८३ ॥ १–६ गोतमो राहूगण ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, ३
४, ५ निचृज्जगती । २ जगती । ६ त्रिष्टुप् ॥ स्वरः– १–५ निषादः । ६ धैवतः

॥ ८३ ॥ अश्वावति प्रथमो गोषु गच्छति सुप्रावीरिन्द्र मर्त्यस्तवोतिभिः
तमित्पृणक्षि वसुना भवीयसा सिन्धुमापो यथाभितो विचेतसः ॥ १ ॥ आपो
देवीरुप यन्ति होत्रियमवः पश्यन्ति विततं यथा रजः । प्राचैर्देवासः प्र णयन्ति दे
ब्रह्मप्रियं जोषयन्ते वरा इव ॥ २ ॥ अधि द्वयोरदधा उक्थ्यं वचो यतस्रुचा मिथुना
सपर्यतः । असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वते ॥ ३ ॥ आ
ङ्गिराः प्रथमं दधिरे वय इद्धाग्नयः शम्या ये सुकृत्यया । सर्वं पणेः समविन्द
भोजनमश्वावन्तं गोमन्तमा पशुं नरः ॥ ४ ॥ यज्ञैरथर्वा प्रथमः पथस्तते ततः सूर्यो व्रत
वेन आजनि । आ गा आजदुशना काव्यः सचा यमस्य जातममृतं यजा
॥ ५ ॥ बर्हिर्वा यत्स्वपत्याय वृज्यतेऽर्को वा श्लोकमाघोषते दिवि । ग्रावा
वदति कारुरुक्थ्यस्तस्येदिन्द्रो अभिपित्वेषु रण्यति ॥ ६ ॥ ४ ॥

॥ ८४ ॥ १–२० गोतमो राहूगण ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, ३
निचृदनुष्टुप् । २ विराडनुष्टुप् । ६ भुरिगुष्णिक् । ७–९ उष्णिक् । १०,
विराडास्तारपङ्क्तिः । ११ आस्तारपङ्क्तिः । २० पङ्क्तिः । १३–१५ निचृद
यत्री । १६ निचृत्त्रिष्टुप् । १७ विराट् त्रिष्टुप् । १८ त्रिष्टुप् । १९ आर्ची
ष्टुप् ॥ स्वरः–१–५ गान्धारः । ६–९ ऋषभः । १०–१२, २० पञ्चम
१३–१५ षड्जः । १६–१९ धैवतः ॥

॥ ८४ ॥ असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि । आ त्वा पृणक्त्विन्द्रि
रजः सूर्यो न रश्मिभिः ॥ १ ॥ इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् । ऋषीं
च स्तुतीरुप यज्ञं च मानुषाणाम् ॥ २ ॥ आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्म
हरी । अर्वाचीनं सुते मनो ग्रावा कृणोतु वग्नुना ॥ ३ ॥ इममिन्द्र सुतं पिब ज

मर्मर्त्यं मदम् । शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ४ ॥ इन्द्राय नूनम-
तोक्थानि च ब्रवीतन । सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः ॥ ५ ॥ ५ ॥
किष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे । नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे
६ ॥ य एक इद्विदयते वसु मर्ताय दाशुषे । ईशानो अप्रतिष्कुत इन्द्रो अङ्ग
७ ॥ कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् । कदा नः शुश्रवद्गिर इन्द्रो
ङ्ग ॥ ८ ॥ यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति । उग्रं तत्पत्यते
व इन्द्रो अङ्ग ॥ ९ ॥ स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः । या इन्द्रे-
सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ॥ १० ॥ ६ ॥ ता अस्य
शनायुवः सोमं श्रीणन्ति पृश्नयः । प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं
स्वीरनु स्वराज्यम् ॥ ११ ॥ ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः । व्रता-
स्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ १२ ॥ इन्द्रो दधीचो अ-
थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥ १३ ॥ इच्छन्नश्वस्य यच्छिरः
तेष्वपश्रितम् । तद्विदच्छर्यणावति ॥ १४ ॥ अत्राह गोरमन्वत नाम त्वष्टुरपी-
यम् । इत्था चन्द्रमसो गृहे ॥ १५ ॥ ७ ॥ को अद्य युङ्क्ते धुरि गा ऋतस्य
मीवतो भामिनो दुर्हृणायून् । आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृण-
त्स जीवात् ॥ १६ ॥ क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को
न्ति । कस्तोकाय क इभायोत रायेऽधि ब्रवत्तन्वे३को जनाय ॥ १७ ॥ को
ग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः । कस्मै देवा आ वहानाशु
होम को मंसते वीतिहोत्रः सुदेवः ॥ १८ ॥ त्वमङ्ग प्र शंसिषो देवः शविष्ठ
र्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ १९ ॥ मा ते रा-
सि मा त ऊतयो वसोऽस्मान्कदा चना दभन् । विश्वा च न उपमिमीहि मानुष
नि चर्षणिभ्य आ ॥ २० ॥ ८ ॥ १३ ॥

॥ ८५ ॥ १-१२ गोतमो राहूगण ऋषिः ॥ मरुतो देवता ॥ छन्दः—१, २,
११ जगती । ३, ७, ८ निचृज्जगती । ४, ६, १० विराड्जगती । ५ वि-
ट् त्रिष्टुप् । १२ त्रिष्टुप् ॥ स्वरः—१-४, ६-११ निषादः । ५, १२ धैवतः ॥

॥ ८५ ॥ प्र ये शुम्भन्ते जनयो न सप्तयो यामन्रुद्रस्य सूनवः सुदंससः ।
दसी हि मरुतश्चक्रिरे वृधे मदन्ति वीरा विदथेषु घृष्वयः ॥ १ ॥ त उक्षि-
सो महिमानमाशत दिवि रुद्रासो अधि चक्रिरे सदः । अर्चन्तो अर्कं जनयन्त

इन्द्रियमधि श्रियो दधिरे पृश्निमातरः ॥ २ ॥ गोमातरो यच्छुभयन्ते अञ्जि
स्तनूषु शुभ्रा दधिरे विरुक्मतः । बाधन्ते विश्वमभिमातिनमप वर्त्मान्येषामनु रीय
घृतम् ॥ ३ ॥ वि ये भ्राजन्ते सुमखास ऋष्टिभिः प्रच्यावयन्तो अच्युता चिदोजस
मनोजुवो यन्मरुतो रथेष्वा वृषव्रातासः पृषतीरयुग्ध्वम् ॥ ४ ॥ प्र यद्रथेषु पृषतीरयु
वाजे अद्रिं मरुतो रंहयन्तः । उतारुषस्य वि ष्यन्ति धाराश्चर्मेवोदभिर्व्युन्दन्ति
॥ ५ ॥ आ वो वहन्तु सप्तयो रघुष्यदो रघुपत्वानः प्र जिगात बाहुभिः । सीद
बर्हिरुरु वः सदस्कृतं मादयध्वं मरुतो मध्वो अन्धसः ॥ ६ ॥ ६ ॥ तेऽवर्धन्त स्व
वसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः । विष्णुर्यद्धावद्वृषणं मदच्युतं व
न सीदन्नधि बर्हिषि प्रिये ॥ ७ ॥ शूरा इवेद्युयुधयो न जग्मयः श्रवस्यवो न
तनासु येतिरे । भयन्ते विश्वा भुवना मरुद्भ्यो राजान इव त्वेषसंदृशो नरः ॥
त्वष्टा यद्वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत् । धत्त इन्द्रो नर्यपा
कर्तवेऽहन्वृत्रं निरपामौब्जदर्णवम् ॥ ६ ॥ ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृह
चिद्भिभिदुर्वि पर्वतम् । धमन्तो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि
क्रिरे ॥ १० ॥ जिह्मं नुनुद्रेऽवतं तया दिशासिञ्चन्नुत्सं गोतमाय तृष्णजे ।
गच्छन्तीमवसा चित्रभानवः कामं विप्रस्य तर्पयन्त धामभिः ॥ ११ ॥ या वः
र्मं शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि । अस्मभ्यं तानि मरुतो
यन्त रयिं नो धत्त वृषणः सुवीरम् ॥ १२ ॥ १० ॥

॥ ८६ ॥ १—१० गोतमो राहूगण ऋषिः ॥ मरुतो देवता ॥ छन्दः—
४, ८, ६ गायत्री । २, ३, ७ पिपीलिका मध्या निचृद्गायत्री । ५, ६, १०
चृद्गायत्री ॥ षड्जः स्वरः ॥

॥ ८६ ॥ मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो ज
॥ १ ॥ यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम् । मरुतः शृणुता हवम् ॥ २
उत वा यस्य वाजिनोऽनु विप्रमतक्षत । स गन्ता गोमति व्रजे ॥ ३ ॥ अस्य
रस्य बर्हिषि सुतः सोमो दिविष्टिषु । उक्थं मदश्च शस्यते ॥ ४ ॥ अस्य श्रोषन्
भुवो विश्वा यश्चर्षणीरभि । सूरं चित्सस्रुषीरिषः ॥ ५ ॥ ११ ॥ पूर्वीभिर्हि ददाशि
शरद्भिर्मरुतो वयम् । अवोभिश्चर्षणीनाम् ॥ ६ ॥ सुभगः स प्रयज्यवो मरुतो अ
मर्त्यः । यस्य प्रयांसि पर्षथ ॥ ७ ॥ शशमानस्य वा नरः स्वेदस्य सत्यशवस
विदा कामस्य वेनतः ॥ ८ ॥ यूयं तत्सत्यशवस आविष्कर्त महित्वना । विध्य

ता रक्षः ॥ ९ ॥ गूहता गुह्यं तमो वि यात विश्वमत्रिणम् । ज्योतिष्कर्ता य-
सि ॥ १० ॥ १२ ॥

॥ ८७ ॥ १—६ गोतमो राहूगणपुत्र ऋषिः ॥ मरुतो देवता ॥ छन्दः–१,
५ विराड् जगती । ३ जगती । ६ निचृज्जगती । ४ त्रिष्टुप् ॥ स्वरः–१–३,
६ निषादः । ४ धैवतः ॥

॥ ८७ ॥ प्रत्वक्षसः प्रतवसो विरप्शिनोऽनानता अविथुरा ऋजीषिणः ।
तमासो नृतमासो अञ्जिभिर्व्यानज्रे के चिदुस्रा इव स्तृभिः ॥ १ ॥ उपह्वरेषु
चिध्वं ययिं वयं इव मरुतः केन चित्पथा । श्चोतन्ति कोशा उप वो रथेष्वा
मुक्षता मधुवर्णमर्चते ॥ २ ॥ प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते
। ते क्रीळयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः॥ ३ ॥ स हि
पृत्पृषदश्वो युवा गणोऽया ईशानस्तविषीभिरावृतः । असि सत्य ऋणयावा-
द्योऽस्या धियः प्राविताथा वृषा गणः ॥ ४ ॥ पितुः प्रत्नस्य जन्मना वदामसि
मस्य जिह्वा प्र जिगाति चक्षसा । यदीमिन्द्रं शम्यृक्वाण आशतादिन्नामानि
यानि दधिरे ॥ ५ ॥ श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋ-
भिः सुखादयः । ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य
म्नः ॥ ६ ॥ १३ ॥

॥ ८८ ॥ १–६ गोतमो राहूगणपुत्र ऋषिः ॥ मरुतो देवता ॥ छन्दः–१
ः । २ भुरिक्पङ्क्तिः । ५ निचृत्पङ्क्तिः । ३ निचृत्त्रिष्टुप् । ४ विराट्त्रिष्टुप् । ६
वृद्बृहती ॥ स्वरः–१, २, ५ पञ्चमः । ३, ४ धैवतः । ६ मध्यमः ॥

॥ ८८ ॥ आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः । आ
ष्ठया न इषा वयो न पप्तता सुमायाः ॥ १ ॥ तेऽरुणेभिर्वरमा पिशङ्गैः शुभे कं
न्ति रथतूर्भिरश्वैः । रुक्मो न चित्रः स्वधितीवान्पव्या रथस्य जङ्घनन्त भूम
२ ॥ श्रिये कं वो अधि तनूषु वाशीर्मेधा वना न कृणवन्त ऊर्ध्वा । युष्मभ्यं कं
तः सुजातास्तुविद्युम्नासो धनयन्ते अद्रिम् ॥ ३ ॥ अहानि गृध्राः पर्या व आ-
मां धियं वार्कार्यां च देवीम् । ब्रह्म कृण्वन्तो गोतमासो अर्कैरूर्ध्वं नुनुद्र उ-
धिं पिबध्यै ॥ ४ ॥ एतत्त्यन्न योजनमचेति सस्वर्ह यन्मरुतो गोतमो वः । प-
न्हिरण्यचक्रानयोदंष्ट्रान्विधावतो वराहून् ॥ ५ ॥ एषा स्या वो मरुतोऽनुभर्त्री
ति ष्टोभति वाघतो न वाणी । अस्तोभयद्वृथासामनु स्वधां गभस्त्योः ॥ ६ ॥ १४ ॥

॥ ८९ ॥ १-१० गोतमो राहूगणपुत्र ऋषिः ॥ विश्वे देवा देवता ॥ छन्द
५ निचृज्जगती । २, ३, ७ जगती । ४ भुरिक् त्रिष्टुप् । ८ विराट् त्रिष्टुप् । ९
त्रिष्टुप् । ६ स्वराड् बृहती ॥ स्वरः-१-३, ५, ७ निषादः । ४, ८-१० धै
६ मध्यमः ॥

॥ ८९ ॥ आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भि
दे॒वा नो॒ यथा॒ सद॒मिद्वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वेदि॑वे ॥ १ ॥ दे॒वानां
सु॑म॒तिर्ऋ॑जूय॒तां दे॒वानां॑ रा॒तिर॒भि नो॒ नि व॑र्तताम् । दे॒वानां॑ स॒ख्यमुप॑ सेदिम
दे॒वा न॒ आयुः॒ प्र ति॑रन्तु जी॒वसे॑ ॥ २ ॥ तान्पूर्व॑या नि॒विदा॑ हूमहे व॒यं भ
त्रमदि॑तिं॒ दक्ष॑म॒स्रिध॑म् । अ॒र्य॒मणं॒ वरु॑णं॒ सोम॑म॒श्विना॒ सर॑स्वती नः सुभगा॒
स्करत् ॥ ३ ॥ तन्नो॒ वातो॑ मयो॒भु वा॑तु भेष॒जं तन्मा॒ता पृ॑थि॒वी तत्पि॒ता द्यौः
ग्रावा॑णः सोम॒सुतो॑ मयो॒भुव॒स्तद॑श्विना शृणुतं धिष्ण्या युवम् ॥ ४ ॥ तमीशा
गत॒स्त॒स्थुष॒स्पतिं॑ धियञ्जि॒न्वमव॑से हूमहे व॒यम् । पूषा नो॒ यथा॒ वेद॑सामस॑द्वृ॒धे र
पा॒युरद॑ब्धः स्व॒स्तये॑ ॥ ५ ॥ १५ ॥ स्व॒स्ति न॒ इन्द्रो॑ वृ॒द्धश्र॑वाः स्व॒स्ति नः
वि॒श्ववे॑दाः । स्व॒स्ति न॒स्तार्क्ष्यो॒ अरि॑ष्टनेमिः स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ॥ ६
षद॑श्वा म॒रुतः॒ पृश्नि॑मातरः शुभं॒याया॑नो वि॒दथे॑षु जग्म॑यः । अ॒ग्नि॒जि॒ह्वा मन॑
र॑चक्षसो॒ विश्वे॑ नो दे॒वा अव॒सा ग॑मन्नि॒ह ॥ ७ ॥ भ॒द्रं कर्णे॑भिः शृणुयाम दे
प॑श्येमा॒क्षभि॒र्यज॑त्राः । स्थि॒रैरङ्गै॑स्तुष्टु॒वांस॑स्त॒नूभि॒र्व्य॑शेम दे॒वहि॑तं॒ यदायुः॑ ॥ ८
तमिन्नु॒ श॒रदो॒ अन्ति॑ देवा॒ यत्रा॑ नश्च॒क्रा ज॒रसं॑ त॒नूना॑म् । पु॒त्रासो॒ यत्र॑ पि॒तरो
व॑न्ति॒ मा नो॑ म॒ध्या री॑रिष॒तायु॒र्गन्तोः॑ ॥ ९ ॥ अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्षमा
मा॒ता स पि॒ता स पु॒त्रः । विश्वे॑ दे॒वा अदि॑तिः॒ पञ्च॒ जना॒ अदि॑तिर्जा॒तमदि
नि॑त्वम् ॥ १० ॥ १६ ॥

॥ ९० ॥ १-९ गोतमो राहूगणपुत्र ऋषिः ॥ विश्वे देवा देवता ॥
छन्दः—१, ८ पिपीलिकामध्या निचृद्गायत्री । २, ७ गायत्री । ३ पिप
कामध्या विराड्गायत्री । ४ विराड् गायत्री । ५, ६ निचृद् गायत्री च । ९
त्रिष्टुप् ॥ स्वरः—१-८ षड्जः । ९ गान्धारः ॥

॥ ९० ॥ ऋ॒जु॒नी॒ती नो॒ वरु॑णो मि॒त्रो न॑यतु वि॒द्वान् । अ॒र्य॒मा दे॒वैः स॒ज
॥ १ ॥ ते हि वस्वो॒ वस॑वाना॒स्ते अप्र॑मूरा॒ महो॑भिः । व्र॒ता र॑क्षन्ते वि॒श्वाहा॑ ॥
ते अ॒स्मभ्यं॒ शर्म॑ यंसन्न॒मृता॒ मर्त्ये॑भ्यः । बाध॑माना॒ अप॒ द्विषः॑ ॥ ३ ॥ वि नः

तार्य चियन्त्विन्द्रो मरुतः । पूषा भगो वन्द्यासः ॥ ४ ॥ उत नो धियो गोअ-
पूषन्विष्णवेवयावः । कर्ता नः स्वस्तिमतः ॥ ५ ॥ १७ ॥ मधु वाता ऋतायते मधु
न्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ ६ ॥ मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः ।
द्यौरस्तु नः पिता ॥ ७ ॥ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भ-
नः ॥ ८ ॥ शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा शं न इन्द्रो बृहस्प-
शं नो विष्णुरुरुक्रमः ॥ ९ ॥ १८ ॥

॥ ९१ ॥ १–२३ गोतमो राहूगणपुत्र ऋषिः ॥ सोमो देवता ॥ छन्दः–१,
४ स्वराट्पङ्क्तिः । २ पङ्क्तिः । १८, २० भुरिक्पङ्क्तिः । २२ विराट्पङ्क्तिः । ५
निचृद्गायत्री । ६, ८, ९, ११ निचृद्गायत्री । ७ वर्धमाना गायत्री । १०, १२
त्री । १३, १४ विराड्गायत्री । १५, १६ पिपीलिकामध्या निचृद्गायत्री । १७
ष्णिक् । १९, २१, २३, निचृत्त्रिष्टुप् ॥ स्वरः—१–४, १८, २०, २२
। ५–१६ षड्जः । १७ ऋषभः । १९, २१, २३ धैवतः ॥

॥ ९१ ॥ त्वं सोम प्र चिकितो मनीषा त्वं रजिष्ठमनु नेषि पन्थाम् । तव
ती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ १ ॥ त्वं सोम क्रतुभिः सु-
स्त्वं दक्षैः सुदक्षो विश्ववेदाः । त्वं वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो
ाः ॥ २ ॥ राज्ञो नु ते वरुणस्य व्रतानि बृहद्गभीरं तव सोम धाम । शुचि-
सि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ॥ ३ ॥ या ते धामानि दिवि
थिव्यां या पर्वतेष्वोषधीष्वप्सु । तेभिर्नो विश्वैः सुमना अहेळन्राजन्त्सोम
हव्या गृभाय ॥ ४ ॥ त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो
क्रतुः ॥ ५ ॥ १९ ॥ त्वं च सोम नो वशो जीवातुं न मरामहे । प्रियस्तो-
नस्पतिः ॥ ६ ॥ त्वं सोम महे भगं त्वं यून ऋतायते । दक्षं दधासि जीव-
७ ॥ त्वं नः सोम विश्वतो रक्षा राजन्नघायतः । न रिष्येत्त्वावतः सखा
॥ सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविता भव ॥ ९ ॥
यज्ञमिदं वचो जुजुषाण उपागहि । सोम त्वं नो वृधे भव ॥ १० ॥ २० ॥
गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृळीको न आ विश ॥ ११ ॥ ग-
ानो अमीवहा वसुवित्पुष्टिवर्धनः । सुमित्रः सोम नो भव ॥ १२ ॥ सोम
न्धि नो हृदि गावो न यवसेष्वा । मर्य इव स्व ओक्ये ॥ १३ ॥ यः सोम
ये तव दारणदेव मर्त्यः । तं दक्षः सचते कविः ॥ १४ ॥ उरुष्या णो अभि-

शंस्तेः सोम नि पाह्यंहंसः । सखा सुशेव एधि नः ॥ १५ ॥ २१ ॥ आ प्य
समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥ १६ ॥ आ
स्व मदिन्तम सोम विश्वेभिरंशुभिः । भवा नः सुश्रवस्तमः सखा वृधे ॥
सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः । आप्यायमानो
ताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ १८ ॥ या ते धामानि हविषा य
ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र
सोम दुर्यान् ॥ १९ ॥ सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं दद
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ २० ॥ २२ ॥ अषाळ
त्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् । भरेषुजां सुक्षितिं सुश्रवसं
त्वामनु मदेम सोम ॥ २१ ॥ त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजन
गाः । त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ २२ ॥ देवे
मनसा देव सोम रायो भागं सहसावन्नभि युध्य । मा त्वा तनदीशिषे वी
भयेभ्यः प्र चिकित्सा गविष्टौ ॥ २३ ॥ २३ ॥

॥ ९२ ॥ १–१८ गोतमो राहूगणपुत्र ऋषिः ॥ उषा देवता ॥ छन्द
२ निचृज्जगती । ३ जगती । ४ विराड् जगती । ५, ७, १२ विराट् त्रिष्
१० निचृत्त्रिष्टुप् । ८, ९, त्रिष्टुप् । ११ भुरिक्पङ्क्तिः । १३ निचृत्परोष्णि
१४, १५ विराट्परोष्णिक् । १६, १७, १८ उष्णिक् ॥ स्वरः–१–४ निष
५–१०, १२ धैवतः । ११ पञ्चमः । १३–१८ ऋषभः ॥

॥ ९२ ॥ एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते
ष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥ १ ॥ उ
भरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत । अक्रन्नुषासो वयुनानि
रुशन्तं भानुमरुषीरशिश्रयुः ॥ २ ॥ अर्चन्ति नारीरपसो न विष्टिभिः समानेन यो
परावतः । इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥ ३
धि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहम् । ज्योतिर्विश्वस्मै भु
कृण्वती गावो न व्रजं व्युषा आवर्तमः ॥ ४ ॥ प्रत्यर्ची रुशदस्या अदर्शि
ष्ठते बाधते कृष्णमभ्वम् । स्वरुं न पेशो विदथेष्वञ्जञ्चित्रं दिवो दुहिता
मश्रेत् ॥ ५ ॥ २४ ॥ अतारिष्म तमसस्पारमस्योषा उच्छन्ती वयुना कृणोति
छन्दो न स्मयते विभाती सुप्रतीका सौमनसायाजीगः ॥ ६ ॥ भास्वती ने

ानां दिवः स्तवे दुहिता गोतमेभिः । प्रजावतो नृवतो अश्वबुध्यानुषो गोअग्राँ
मासि वाजान् ॥ ७ ॥ उषस्तमश्यां यशसं सुवीरं दासप्रवर्गं रयिमश्वबुध्यम् ।
ंससा श्रवसा या विभासि वाजप्रसूता सुभगे बृहन्तम् ॥ ८ ॥ विश्वानि देवी
नाभिचक्ष्या प्रतीची चक्षुरुर्विया वि भाति । विश्वं जीवं चरसे बोधयन्ती वि-
स्य वाचमविदन्मनायोः ॥ ९ ॥ पुनःपुनर्जायमाना पुराणी समानं वर्णमभि
म्भमाना । श्वघ्नीव कृत्नुर्विज आमिनाना मर्तस्य देवी जरयन्त्यायुः ॥१०॥२५॥
ूर्ण्वती दिवो अन्ताँ अबोध्यप स्वसारं सनुतर्युयोति । प्रमिनती मनुष्या युगानि
षा जारस्य चक्षसा वि भाति ॥ ११ ॥ पशून्न चित्रा सुभगा प्रथाना सिन्धुर्न
ोद उर्विया व्यश्वैत् । अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिभिर्दृशाना
१२ ॥ उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धाम-
॥ १३ ॥ उषो अद्येह गोमत्यश्वावति विभावरि । रेवदस्मे व्युच्छ सूनृतावति
१४ ॥ युक्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः । अथा नो विश्वा सौभ-
न्या वह ॥ १५ ॥ २६ ॥ अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत् । अर्वा-
थं समनसा नि यच्छतम् ॥ १६ ॥ यावित्था श्लोकमा दिवो ज्योतिर्जनाय च-
थुः । आ न ऊर्जं वहतमश्विना युवम् ॥ १७ ॥ एह देवा मयोभुवा दस्रा हिर-
ण्यवर्तनी । उषर्बुधो वहन्तु सोमपीतये ॥ १८ ॥ २७ ॥

॥ ९३ ॥ १—१२ गोतमो राहूगणपुत्र ऋषिः ॥ अग्नीषोमौ देवते ॥
न्दः—१ अनुष्टुप् । ३ विराडनुष्टुप् । २ भुरिगुष्णिक् । ४ स्वराट् पङ्क्तिः । ५,
निचृत् त्रिष्टुप् । ६ विराट् त्रिष्टुप् । ८ स्वराट् त्रिष्टुप् । १२ त्रिष्टुप् । ९, १०,
१ गायत्री ॥ स्वरः—१, ३ गान्धारः । २ ऋषभः । ४ पञ्चमः । ५–८, १२
वतः । ९, १०, ११ षड्जः ॥

॥ ९३ ॥ अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् । प्रति सूक्तानि हर्यतं
वतं दाशुषे मयः ॥ १ ॥ अग्नीषोमा यो अद्य वामिदं वचः सपर्यति । तस्मै धत्तं
वीर्यं गवां पोषं स्वश्व्यम् ॥ २ ॥ अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृ-
म् । स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत् ॥ ३ ॥ अग्नीषोमा चेति तद्वीर्यं वां य-
ुष्णीतमवसं पणिं गाः । अवातिरतं बृसयस्य शेषोऽविन्दतं ज्योतिरेकं बहुभ्यः
॥ युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् । युवं सिन्धूँरभिशस्तेर-
ादग्नीषोमावमुञ्चतं गृभीतान् ॥ ५ ॥ आन्यं दिवो मातरिश्वा जभारामथ्नाद-

न्यं परि श्येनो अद्रेः । अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लो
॥ ६ ॥ २८ ॥ अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथाम् । सु
र्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः ॥ ७ ॥ यो अग्नीषोमा हवि
सपर्याद्देवद्रीचा मनसा यो घृतेन । तस्य व्रतं रक्षतं पातमंहसो विशे जनाय म
शर्म यच्छतम् ॥ ८ ॥ अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः ॥
अग्नीषोमावनेन वां यो वां घृतेन दाशति । तस्मै दीदयतं बृहत् ॥ १० ॥ अग्नीषोमाविम
नो युवं हव्या जुजोषतम् । आ यातमुप नः सचा ॥ ११ ॥ अग्नीषोमा पिपृ
वतो न आ प्यायन्तामुस्रिया हव्यसूदः । अस्मे बलानि मघवत्सु धत्तं कृणुतं
अध्वरं श्रुष्टिमन्तम् ॥ १२ ॥ २६ ॥ १४ ॥

९४ ॥ १–१६ कुत्स आङ्गिरस ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, ४,
७, ९, १० निचृज्जगती । १२, १३, १४ विराड् जगती । २, ३, १६ त्रिष्टु
६ स्वराट् त्रिष्टुप् । ११ भुरिक् त्रिष्टुप् । ८ निचृत् त्रिष्टुप् । १५ भुरिक् पङ्क्ति
स्वरः–१, ४, ५, ७, ९, १०, १२–१४ निषादः । २, ३, १६, ६, ११
धैवतः । १५ पञ्चमः ॥

॥ ९४ ॥ इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया । भद्रा
नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ १ ॥ यस्मै त्वमायजसे स साध
नवा क्षेति दधते सुवीर्यम् । स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा
तव ॥ २ ॥ शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम् । त्व
दित्याँ आ वह तान्ह्युश्मस्यग्ने सख्ये मा रिषामा वयं तव ॥ ३ ॥ भरामेध्मं
णवामा हवींषि ते चितयन्तः पर्वणापर्वणा वयम् । जीवातवे प्रतरं साधया
योऽग्ने सख्ये मा रिषामा वयं तव ॥ ४ ॥ विशां गोपा अस्य चरन्ति जन्तवो द्विपच्च य
चतुष्पदक्तुभिः । चित्रः प्रकेत उषसो महाँ अस्यग्ने सख्ये मा रिषामा वयं तव ॥ ५ ॥
त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः । विश्वा विद्वाँ आ
ज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ६ ॥ यो विश्वतः सुप्रतीकः सदृङ्
दूरे चित्सन्तळिदिवाति रोचसे । रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा
षामा वयं तव ॥ ७ ॥ पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः ।
जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥ ८ ॥ वधैर्दुःशंसाँ अप दू
जहि दूरे वा ये अन्ति वा के चिदत्रिणः । अथा यज्ञाय गृणते सुगं कृध्यग्ने स

रिषामा वयं तव ॥ ६ ॥ यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते
: । आदिन्वसि वनिनो धूमकेतुनाग्ने सख्ये मा रिषामा वयं तव ॥१०॥ ३१॥
स्वनादुत बिभ्युः पतत्रिणो द्रप्सा यत्ते यवसादो व्यस्थिरन् । सुगं तत्ते ताव-
यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव ॥ ११ ॥ अयं मित्रस्य वरुणस्य
सेऽवयातां मरुतां हेळो अद्भुतः । मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा
ामा वयं तव ॥ १२ ॥ देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारु-
रे । शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥ १३ ॥ तत्ते
यत्समिद्धः स्वे दमे सोमाहुतो जरसे मृळयत्तमः । दधासि रत्नं द्रविणं च दा-
ऽग्ने सख्ये मा रिषामा वयं तव ॥ १४ ॥ यस्मै त्वं सुद्रविणो ददाशोनागा-
मदिते सर्वताता । यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ॥ १५ ॥
त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्र तिरेह देव । तन्नो मित्रो वरुणो मा-
न्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १६ ॥ ३२ ॥ ६ ॥

॥ ६५ ॥ १–११ कुत्स आङ्गिरस ऋषिः ॥ सत्यगुणविशिष्टोऽग्निः शुद्धो-
र्वा देवता ॥ छन्दः–१, ३ विराट् त्रिष्टुप् । २, ७, ८, ११ त्रिष्टुप् । ४, ५, ६, १०
चृत्त्रिष्टुप् । ९ भुरिक्पङ्क्तिः ॥ स्वरः–१–८, १०, ११ धैवतः । ९ पञ्चमः ॥

॥ ६५ ॥ द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते । हरिरन्यस्यां भवति
धावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ १ ॥ दशेमं त्वष्टुर्जनयन्त गर्भमतन्द्रासो यु-
यो विभृत्रम् । तिग्मानीकं स्वयशसं जनेषु विरोचमानं परि षीं नयन्ति ॥ २ ॥ त्रीणि
ना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु । पूर्वामनु प्र दिशं पार्थिवानामृतून्प्रशास-
दधावनुष्ठु ॥ ३ ॥ क इमं वो निण्यमा चिकेत वत्सो मातृर्जनयत स्वधाभिः । बह्वीनां
र्भो अपसामुपस्थान्महान्कविर्निश्चरति स्वधावान् ॥४॥ आविष्ट्यो वर्धते चारुरासु
ह्मानामूर्ध्वः स्वयशा उपस्थे । उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते
५ ॥ १ ॥ उभे भद्रे जोषयेते न मेने गावो न वाश्रा उप तस्थुरेवैः । स दक्षा-
दक्षपतिर्बभूवाञ्जन्ति यं दक्षिणतो हविर्भिः ॥ ६ ॥ उद्यंयमीति सवितेव
हू उभे सिचौ यतते भीम ऋञ्जन् । उच्छुक्रमत्कमजते सिमस्मान्नवा मातृभ्यो
ना जहाति ॥ ७ ॥ त्वेषं रूपं कृणुत उत्तरं यत्संपृञ्चानः सदने गोभिरद्भिः ।
विर्बुध्ने परि मर्मृज्यते धीः सा देवताता समितिर्बभूव ॥ ८ ॥ उरु ते ज्रयः प-
ति बुध्नं विरोचमानं महिषस्य धाम । विश्वेभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः

पायुभिः पाह्यस्मान् ॥ ९ ॥ धन्वन्त्स्रोतः कृणुते गातुमूर्मिं शुक्रैरूर्मिभिरभि नं
क्षाम् । विश्वा सनानि जठरेषु धत्तेऽन्तर्नवासु चरति प्रसूषु ॥ १० ॥ एवा
अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि । तन्नो मित्रो वरुणो मामह
मदितिः सिंधुः पृथिवी उत द्यौः ॥ ११ ॥ २ ॥

॥ ९६ ॥ १—९ कुत्स आङ्गिरस ऋषिः ॥ द्रविणोदा अग्निः शुद्धो
र्वा देवता ॥ त्रिष्टुप् छन्दः ॥ गान्धारः स्वरः ॥

॥ ९६ ॥ स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्
आपश्च मित्रं धिषणा च साधन्देवा अग्निं धारयन्द्रविणोदाम् ॥ १ ॥ स पू
निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनाम् । विवस्वता चक्षसा द्यामप
देवा अग्निं धारयन्द्रविणोदाम् ॥ २ ॥ तमीळत प्रथमं यज्ञसाधं विश आरीर
तमृञ्जसानम् । ऊर्जः पुत्रं भरतं सृप्रदानुं देवा अग्निं धारयन्द्रविणोदाम् ॥ ३
स मातरिश्वा पुरुवारपुष्टिर्विदद्गातुं तनयाय स्वर्वित् । विशां गोपा जनिता र
स्योर्देवा अग्निं धारयन्द्रविणोदाम् ॥ ४ ॥ नक्तोषासा वर्णमामेम्याने धाप
शिशुमेकं समीची । द्यावाक्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन्द्र
णोदाम् ॥ ५ ॥ ३ ॥ रायो बुध्नः संगमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वे
अमृतत्वं रक्षमाणास एनं देवा अग्निं धारयन्द्रविणोदाम् ॥ ६ ॥ नू च पुर
सदनं रयीणां जातस्य च जायमानस्य च क्षाम् । सतश्च गोपां भवतश्च भूरे
अग्निं धारयन्द्रविणोदाम् ॥ ७ ॥ द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनर
प्र यंसत् । द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ॥ ८ ॥ ए
नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि । तन्नो मित्रो वरुणो म
हतामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ९ ॥ ४ ॥

॥ ९७ ॥ १—८ कुत्स आङ्गिरस ऋषिः ॥ अग्निर्देवता ॥ छन्दः—१, ७, ८ पि
लिकामध्यानिचृद् गायत्री । २, ४, ५ गायत्री । ३, ६ निचृद्गायत्री च ॥ षड्जः स्वर

॥ ९७ ॥ अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम् । अप नः शोशुचद
॥ १ ॥ सुक्षेत्रिया सुगातुया वसूया च यजामहे । अप नः शोशुचदघम् ॥ २
प्र यद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः शोशुचदघम् ॥ ३ ॥ प्र य
अग्ने सूरयो जायेमहि प्र ते वयम् । अप नः शोशुचदघम् ॥ ४ ॥ प्र यदग्
सहस्वतो विश्वतो यन्ति भानवः । अप नः शोशुचदघम् ॥ ५ ॥ त्वं हि विश

ुख विश्वतः परिभूरसि । अप नः शोशुचदघम् ॥ ६ ॥ द्विषो नो विश्वतो-
ाति नावेव पारय । अप नः शोशुचदघम् ॥ ७ ॥ स नः सिन्धुमिव नावयाति
ा स्वस्तये । अप नः शोशुचदघम् ॥ ८ ॥ ५ ॥

॥ ९८ ॥ १—३ कुत्स आङ्गिरस ऋषिः ॥ अग्निर्वैश्वानरो देवता ॥
दः—१ विराट् त्रिष्टुप् । २ त्रिष्टुप् । ३ निचृत् त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ ९८ ॥ वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः । इतो
तो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥ १ ॥ पृष्टो दिवि पृष्टो अग्निः पृ-
व्यां पृष्टो विश्वा ओषधीरा विवेश । वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा
रिषः पातु नक्तम् ॥ २ ॥ वैश्वानर तव तत्सत्यमस्त्वस्मान्रायो मघवानः सच-
ाम् तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ३ ॥ ६ ॥

॥ ९९ ॥ १ कश्यपो मारीचिपुत्र ऋषिः ॥ अग्निर्जातवेदा देवता ॥ निचृत्
ष्टुप् छन्दः ॥ धैवतः स्वरः ॥

॥ ९९ ॥ जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः
दति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ १ ॥ ७ ॥

॥ १०० ॥ १—१९ वृषागिरो महाराजस्य पुत्रभूता वार्षागिरा ऋज्राश्वाम्ब-
सहदेवभयमानसुराधसऋषयः ॥ इन्द्रो देवता ॥ छन्दः—१, ५ पङ्क्तिः । २,
, १७ स्वराट् पङ्क्तिः । ६, १०, १६ भुरिक् पङ्क्तिः । ३, ४, ११, १८
ाट् त्रिष्टुप् । ७, ८, ९, १२, १४, १५, १९ निचृत् त्रिष्टुप् ॥ स्वरः—१,
५, १३, १७, ६, १०, १६ पञ्चमः । ३, ४, ११, १२, १८, ७-९, १४,
, १९ धैवतः ॥

॥ १०० ॥ स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट् ।
ोनसत्वा हव्यो भरेषु मरुत्वान्नो भवत्विन्द्र ऊती ॥ १ ॥ यस्यानाप्तः सूर्यस्ये-
यामो भरेभरे वृत्रहा शुष्मो अस्ति । वृषन्तमः सखिभिः स्वेभिरेवैर्मरुत्वान्नो
त्विन्द्र ऊती ॥ २ ॥ दिवो न यस्य रेतसो दुघानाः पन्थासो यन्ति शवसापर-
ाः । तरद्द्वेषाः सासहिः पौंस्येभिर्मरुत्वान्नो भवत्विन्द्र ऊती ॥ ३ ॥ सो अङ्-
ोभिरङ्गिरस्तमो भूद्वृषा वृषभिः सखिभिः सखा सन् । ऋग्मिभिर्ऋग्मी गातुभि-
ष्ठो मरुत्वान्नो भवत्विन्द्र ऊती ॥ ४ ॥ स सूनुभिर्न रुद्रेभिर्ऋभ्वा नृषाह्ये सासह्वाँ

अमित्रान् । सनीळेभिः श्रवस्यानि तूर्वन्मरुत्वान्नो भवत्विन्द्र ऊती ॥ ५ ॥ व
स मन्युमीः समदनस्य कर्तास्माकेभिर्नृभिः सूर्यं सनत् । अस्मिन्नहन्त्सत्पतिः पुरु
मरुत्वान्नो भवत्विन्द्र ऊती ॥ ६ ॥ तमूतयो रणयञ्छूरसातौ तं क्षेमस्य क्षित
कृण्वत त्राम् । स विश्वस्य करुणस्येश एको मरुत्वान्नो भवत्विन्द्र ऊती ॥ ७
तमप्सन्त शवस उत्सवेषु नरो नरमवसे तं धनाय । सो अन्धे चित्तमसि ज्यो
र्विदन्मरुत्वान्नो भवत्विन्द्र ऊती ॥ ८ ॥ स सव्येन यमति व्राधतश्चित्स दक्षि
संगृभीता कृतानि । स कीरिणा चित्सनिता धनानि मरुत्वान्नो भवत्विन्द्र ऊ
॥ ९ ॥ स ग्रामेभिः सनिता स रथेभिर्विदे विश्वाभिः कृष्टिभिर्न्व१द्य । स पौं
भिरभिभूरशस्तीर्मरुत्वान्नो भवत्विन्द्र ऊती ॥ १० ॥ ६ ॥ स जामिभिर्यत्
जाति मीळ्हेऽजामिभिर्वा पुरुहूत एवैः । अपां तोकस्य तनयस्य जेषे मरुत्व
भवत्विन्द्र ऊती ॥ ११ ॥ स वज्रभृद्दस्युहा भीम उग्रः सहस्रचेताः शत
ऋभ्वा । चम्रीषो न शवसा पाञ्चजन्यो मरुत्वान्नो भवत्विन्द्र ऊती ॥ १
तस्य वज्रः क्रन्दति स्मत्स्वर्षा दिवो न त्वेषो रवथः शिमीवान् । तं सचन्ते
नयस्तं धनानि मरुत्वान्नो भवत्विन्द्र ऊती ॥ १३ ॥ यस्याजस्रं शवसा मा
क्थं परिभुजद्रोदसी विश्वतः सीम् । स पारिषत्क्रतुभिर्मन्दसानो मरुत्वान्नो
त्विन्द्र ऊती ॥ १४ ॥ न यस्य देवा देवता न मर्ता आपश्चन शवसो अन्तमाप
स प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विन्द्र ऊती ॥ १५ ॥ १
रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य । वृषण्वन्तं बिभ्रती
रथं मन्द्रा चिकेत नाहुषीषु विक्षु ॥ १६ ॥ एतत्त्यत्त इन्द्र वृष्ण उक्थं वार्षा
अभि गृणन्ति राधः । ऋज्राश्वः प्रष्टिभिरम्बरीषः सहदेवो भयमानः सुराधाः ॥ १
दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हीत् । सनत्क्षेत्रं सखिभिः श्वि
भिः सनत्सूर्यं सनदपः सुवज्रः ॥ १८ ॥ विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्
सनुयाम वाजम् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत
॥ १९ ॥ ११ ॥

॥ १०१ ॥ १—११ कुत्स आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—
४ निचृज्जगती । २, ५, ७ विराड् जगती । ३ भुरिक् त्रिष्टुप् । ६ स्वराड
ष्टुप् । ८, १० निचृत् त्रिष्टुप् । ९, ११ त्रिष्टुप् ॥ स्वरः—१, २, ४, ५, ७
षादः ३, ६, ८—११ धैवतः ॥

॥ १०१ ॥ प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
स्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ॥ १ ॥ यो व्यंसं जाहृषा-
मन्युना यः शम्बरं यो अहन्पिप्रुमव्रतम् । इन्द्रो यः शुष्णमशुषं न्यावृणङ्म-
न्तं सख्याय हवामहे ॥ २ ॥ यस्य द्यावापृथिवी पौंस्यं महद्यस्य व्रते वरुणो
य सूर्यः । यस्येन्द्रस्य सिन्धवः सश्चति व्रतं मरुत्वन्तं सख्याय हवामहे ॥ ३ ॥
अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणिकर्मणि स्थिरः । वीळोश्चि-
द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय हवामहे ॥ ४ ॥ यो विश्वस्य जगतः
गतस्पतिर्यो ब्रह्मणे प्रथमो गा अविन्दत् । इन्द्रो यो दस्यूँरधराँ अवातिरन्मरुत्वन्तं
ख्याय हवामहे ॥ ५ ॥ यः शूरेभिर्हव्यो यश्च भीरुभिर्यो धावद्भिर्हूयते यश्च जि-
भिः । इन्द्रं यं विश्वा भुवनाभि संदधुर्मरुत्वन्तं सख्याय हवामहे ॥ ६ ॥ १२ ॥
णामेति प्रदिशा विचक्षणो रुद्रेभिर्योषा तनुते पृथु ज्रयः । इन्द्रं मनीषा अ-
र्चति श्रुतं मरुत्वन्तं सख्याय हवामहे ॥ ७ ॥ यद्वा मरुत्वः परमे सधस्थे य-
मे वृजने मादयासे । अत आ याह्यध्वरं नो अच्छा त्वाया हविश्चकृमा सत्य-
ः ॥ ८ ॥ त्वायेन्द्र सोमं सुषुमा सुदक्ष त्वाया हविश्चकृमा ब्रह्मवाहः । अधा
त्वः सगणो मरुद्भिरस्मिन्यज्ञे बर्हिषि मादयस्व ॥ ९ ॥ मादयस्व हरिभिर्ये
न्द्र वि ष्यस्व शिप्रे वि सृजस्व धेने । आ त्वा सुशिप्र हरयो वहन्तूशन्हव्यानि
नो जुषस्व ॥ १० ॥ मरुत्स्तोत्रस्य वृजनस्य गोपा वयमिन्द्रेण सनुयाम वा-
। तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ११ ॥ १३ ॥

॥ १०२ ॥ १—११ कुत्स आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१,
ती । ३, ५—८ निचृज्जगती । २, ४, ९ स्वराट् त्रिष्टुप् । १०, ११ निचृत्
ुप् ॥ स्वरः—१, ३, ५—८, निषादः २, ४, ९—११ धैवतः ॥

॥ १०२ ॥ इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे ।
त्सवे च प्रसवे च सासहिमिन्द्रं देवासः शवसामदन्ननु ॥ १ ॥ अस्य श्रवो नद्यः
बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः । अस्मे सूर्याचन्द्रमसाभिचक्षे श्रद्धे
मिन्द्र चरतो वितर्तुरम् ॥ २ ॥ तं स्मा रथं मघवन्प्राव सातये जैत्रं यं ते अनु-
ाम संगमे । आजा न इन्द्र मनसा पुरुष्टुत त्वायद्भ्यो मघवञ्छर्म यच्छ नः
३ ॥ वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे । अस्मभ्यमिन्द्र व-
ः सुगं कृधि प्र शत्रूणां मघवन्वृष्ण्या रुज ॥ ४ ॥ नाना हि त्वा हवमाना जना इमे

धनानां धर्तरवसा विपन्यवः । अस्माकं स्मा रथमा तिष्ठ सातये जैत्रं हीन्द्र निभृत
स्तव ॥ ५ ॥ १४ ॥ गोजिता बाहू अमितक्रतुः सिमः कर्मन्कर्मञ्छतमूतिः खजङ्क
कल्प इन्द्रः प्रतिमानमोजसाथा जना वि ह्वयन्ते सिषासवः ॥ ६ ॥ उत्ते शतान्मघ
भूयस उत्सहस्राद्रिरिचे कृष्टिषु श्रवः । अमात्रं त्वा धिषणा तित्विषे मह्यधा वृ
जिघ्नसे पुरन्दर ॥ ७ ॥ त्रिविष्टिधातु प्रतिमानमोजसस्तिस्रो भूमीर्नृपते त्रीणि रो
अतीदं विश्वं भुवनं ववक्षिथाशत्रुरिन्द्र जनुषा सनादसि ॥ ८ ॥ त्वां देवेषु
हवामहे त्वं बभूथ पृतनासु सासहिः । सेमं नः कारुमुपमन्युमुद्भिदमिन्द्रः कृणो
सवे रथं पुरः ॥ ९ ॥ त्वं जिगेथ न धना रुरोधिथार्भेष्वाजा मघवन्महत्सु च
मुग्रमवसे सं शिशीमस्यथा न इन्द्र हवनेषु चोदय ॥ १० ॥ विश्वाहेन्द्रो अधि
नो अस्त्वपरिह्वृताः सनुयाम वाजम् । तन्नो मित्रो वरुणो मामहन्तामदितिः
पृथिवी उत द्यौः ॥ ११ ॥ १५ ॥

॥ १०३ ॥ १—८ कुत्स आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ छन्दः
३, ५, ६ निचृत्त्रिष्टुप् । २, ४ विराट् त्रिष्टुप् । ७, ८ त्रिष्टुप् ॥ धैवतः स्व

॥ १०३ ॥ तत्त इन्द्रियं परमं पराचैरधारयन्त कवयः पुरेदम् । क्षमेद
दिव्य१न्यदस्य समी पृच्यते समनेव केतुः ॥ १ ॥ स धारयत्पृथिवीं पप्रथ
ज्रेण हत्वा निरपः ससर्ज । अहन्नहिमभिनद्रौहिणं व्यहन्व्यंसं मघवा शचीभिः
स जातूभर्मा श्रद्दधान ओजः पुरो विभिन्दन्नचरद्वि दासीः । विद्वान्वज्रिन्दस्य
तिमस्यार्यं सहो वर्धया द्युम्नमिन्द्र ॥ ३ ॥ तदूचुषे मानुषेमा युगानि कीर्तेन्
घवा नाम बिभ्रत् । उपप्रयन्दस्युहत्याय वज्री यद्ध सूनुः श्रवसे नाम दधे ॥
तदस्येदं पश्यता भूरि पुष्टं श्रदिन्द्रस्य धत्तन वीर्याय । स गा अविन्दत्सो अ
दश्वान्त्स ओषधीः सो अपः स वनानि ॥ ५ ॥ १६ ॥ भूरिकर्मणे वृषभाय
सत्यशुष्माय सुनवाम सोमम् । य आदृत्या परिपन्थीव शूरोऽयज्वनो विभज
वेदः ॥ ६ ॥ तदिन्द्र प्रेव वीर्यं चकर्थ यत्ससन्तं वज्रेणाबोधयोऽहिम् । अनु त
नीर्हृषितं वयश्च विश्वे देवासो अमदन्ननु त्वा ॥ ७ ॥ शुष्णं पिप्रुं कुयवं वृत्र
यदावधीर्वि पुरः शम्बरस्य । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृ
उत द्यौः ॥ ८ ॥ १७ ॥

॥ १०४ ॥ १–९ कुत्स आङ्गिरस ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१ प

, ४, ५ स्वराट् पङ्क्तिः। ६ भुरिक् पङ्क्तिः। ३, ७ त्रिष्टुप्। ८, ९ निचृत् त्रिष्टुप्॥
रः-१, २, ४-६ पञ्चमः। ३, ७-९ धैवतः॥

॥ १०४ ॥ योनिष्ट इन्द्र निषदे अकारि तमा नि षीद स्वानो नार्वा। वि-
च्या वयोऽवसायाश्वान्दोषा वस्तोर्वहीयसः प्रपित्वे ॥१॥ ओ त्ये नर इन्द्रमूतये
र्नु चित्तान्त्सद्यो अध्वनो जगम्यात्। देवासो मन्युं दासस्य श्चम्नन्ते न आ व-
न्त्सुविताय वर्णम् ॥ २ ॥ अव त्मना भरते केतवेदा अव त्मना भरते फेनमु-
न्। क्षीरेण स्नातः कुयवस्य योषे हते ते स्यातां प्रवणे शिफायाः ॥ ३ ॥ यु-
प नाभिरुपरस्यायोः प्र पूर्वाभिस्तिरते राष्टि शूरः। अञ्जसी कुलिशी वीरपत्नी पयो
न्वाना उदभिर्भरन्ते ॥ ४ ॥ प्रति यत्स्या नीथादर्शि दस्योरोको नाच्छा सदनं
ानती गात्। अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः॥५॥
८॥ स त्वं न इन्द्र सूर्ये सो अप्स्वनागास्त्व आ भज जीवशंसे। मान्तरां भु-
मा रीरिषो नः श्रद्धितं ते महत इन्द्रियाय ॥ ६ ॥ अधा मन्ये श्रत्ते अस्मा अ-
यि वृषा चोदस्व महते धनाय। मा नो अकृते पुरुहूत योनाविन्द्र क्षुध्यद्भ्यो वय
ासुतिं दाः ॥ ७ ॥ मा नो वधीरिन्द्र मा परा दा मा नः प्रिया भोजनानि प्र
षीः। आण्डा मा नो मघवञ्छक्र निर्भेन्मा नः पात्रा भेत्सहजानुषाणि ॥ ८॥
र्वाङेहि सोमकामं त्वाहुरयं सुतस्तस्य पिबा मदाय। उरुव्यचा जठर आ वृषस्व
तेव नः शृणुहि हूयमानः ॥ ९ ॥ १९ ॥

॥ १०५ ॥ १-१९ आप्त्यस्त्रित ऋषिः आङ्गिरसः कुत्सो वा ॥ विश्वे देवा
वता ॥ छन्दः-१, २, १२, १६, १७ निचृत्पङ्क्तिः। ३, ४, ६, ९, १५, १८
िराट्पङ्क्तिः। ८, १० स्वराट् पङ्क्तिः। ११, १४ पङ्क्तिः। ५ निचृद्बृहती। ७
ुरिग्बृहती। १३ महाबृहती। १९ निचृत्त्रिष्टुप्॥ स्वरः-१-४, ६, ८-१२,
४-१८ पञ्चमः। ५, ७, १३ मध्यमः। १९ धैवतः॥

॥ १०५ ॥ चन्द्रमा अप्स्व१न्तरा सुपर्णो धावते दिवि। न वो हिरण्यनेमयः
दं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी॥ १ ॥ अर्थमिद्वा उ अर्थिन आ जा-
ा युवते पतिम्। तुञ्जाते वृष्ण्यं पयः परिदाय रसं दुहे वित्तं मे अस्य रोदसी
२ ॥ मो षु देवा अदः स्व१रव पादि दिवस्परि। मा सोम्यस्य शंभुवः शूने
ूम कदा चन वित्तं मे अस्य रोदसी ॥ ३ ॥ यज्ञं पृच्छाम्यवमं स तद्दूतो वि
ोचति। क्व ऋतं पूर्व्यं गतं कस्तद्बिभर्ति नूतनो वित्तं मे अस्य रोदसी ॥ ४ ॥

अमी ये देवाः स्थन त्रिष्वा रोचने दिवः । कद्व ऋतं कदनृतं क्व प्रत्ना व आ
तिर्वित्तं मे अस्य रोदसी ॥ ५ ॥ २० ॥ कद्व ऋतस्य धर्णसि कद्वरुणस्य च
णं । कदर्यम्णो महस्पथाति क्रामेम दूढ्यो वित्तं मे अस्य रोदसी ॥ ६ ॥ अहं
अस्मि यः पुरा सुते वदामि कानि चित् । तं मा व्यन्त्याध्यो वृको न तृष्णजं
वित्तं मे अस्य रोदसी ॥ ७ ॥ सं मा तपन्त्यभितः सपत्नीरिव पर्शवः । मूषो
शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी ॥ ८ ॥ अ
ये सप्त रश्मयस्तत्रा मे नाभिरातता । त्रितस्तद्वेदाप्त्यः स जामित्वाय रेभति
मे अस्य रोदसी ॥ ९ ॥ अमी ये पञ्चोक्षणो मध्ये तस्थुर्महो दिवः । देवत्रा
प्रवाच्यं सध्रीचीना नि वावृतुर्वित्तं मे अस्य रोदसी ॥ १० ॥ २१ ॥ सुप
ण एत आसते मध्य आरोधने दिवः । ते सेधन्ति पथो वृकं तरन्तं यह्वतीरपो
मे अस्य रोदसी ॥ ११ ॥ नव्यं तदुक्थ्यं हितं देवासः सुप्रवाचनम् । ऋतमर्ष
सिन्धवः सत्यं तातान सूर्यो वित्तं मे अस्य रोदसी ॥ १२ ॥ अग्ने तव त्यदु
देवेष्वस्त्याप्यम् । स नः सत्तो मनुष्वदा देवान्यक्षि विदुष्टरो वित्तं मे अस्य
दसी ॥ १३ ॥ सत्तो होता मनुष्वदा देवाँ अच्छा विदुष्टरः । अग्निर्हव्या सुषू
देवो देवेषु मेधिरो वित्तं मे अस्य रोदसी ॥ १४ ॥ ब्रह्मा कृणोति वरुणो ग
विदं तमीमहे । व्यूर्णोति हृदा मतिं नव्यो जायतामृतं वित्तं मे अस्य रो
॥ १५ ॥ २२ ॥ असौ यः पन्था आदित्यो दिवि प्रवाच्यं कृतः । न स
अतिक्रमे तं मर्तासो न पश्यथ वित्तं मे अस्य रोदसी ॥ १६ ॥ त्रितः कूपेऽव
तो देवान्हवत ऊतये । तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य
दसी ॥ १७ ॥ अरुणो मा सकृद्वृकः पथा यन्तं ददर्श हि । उज्जिहीते निचा
तष्टेव पृष्ट्यामयी वित्तं मे अस्य रोदसी ॥ १८ ॥ एनाङ्गूषेण वयमिन्द्रव
ऽभि ष्याम वृजने सर्ववीराः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृ
वी उत द्यौः ॥ १९ ॥ २३ ॥ १५ ॥

॥ १०६ ॥ १–७ कुत्स आङ्गिरस ऋषिः ॥ विश्वे देवा देवता ॥ छन्द
१–६ जगती । ७ निचृत्त्रिष्टुप् ॥ स्वरः–१–६ निषादः । ७ धैवतः ॥

॥ १०६ ॥ इन्द्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे ।
न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ १ ॥ त आदित्या
गंता सर्वतातये भूत देवा वृत्रतूर्येषु शम्भुवः । रथं न दुर्गाद्वसवः सुदानवो विश्वस्म

[अ]हंसो निष्पिपर्तनः ॥ २ ॥ अर्वन्तु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा ।
[र]थं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ३ ॥ नराशंसं वाजिनं
[वा]जयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो
[अ]ंहसो निष्पिपर्तन ॥ ४ ॥ बृहस्पते सदमिन्नः सुगं कृधि शं योर्यत्ते मनुर्हितं तदीमहे । रथं
[न] दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ५ ॥ इन्द्रं कुत्सो वृत्रहणं
[श]चीपतिं काटे निबाळ्ह ऋषिरह्वदूतये । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो
[अ]ंहसो निष्पिपर्तन ॥ ६ ॥ देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छ-
[न्] । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ७ ॥ २४ ॥

॥ १०७ ॥ १—३ कुत्स आङ्गिरस ऋषिः ॥ विश्वे देवा देवता ॥ छन्दः–१
[वि]राट्त्रिष्टुप् । २ निचृत् त्रिष्टुप् । ३ त्रिष्टुप् च ॥ धैवतः स्वरः ॥

॥ १०७ ॥ यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयन्तः । आ
[व]ोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासत् ॥ १ ॥ उप नो देवा अव-
[स]ा गमन्त्वङ्गिरसां सामभिः स्तूयमानाः । इन्द्र इन्द्रियैर्मरुतो मरुद्भिरादित्यैर्नो अ-
[दि]तिः शर्म यंसत् ॥ २ ॥ तन्न इन्द्रस्तद्वरुणस्तदग्निस्तदर्यमा तत्सविता चनो
[धा]त् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥३॥ २५ ॥

॥ १०८ ॥ १–१३ कुत्स आङ्गिरस ऋषिः ॥ इन्द्राग्नी देवते ॥ छन्दः—
[१], ८, १२ निचृत् त्रिष्टुप् । २, ३, ६, ११ विराट् त्रिष्टुप् । ७, ९, १०, १३
[त्रि]ष्टुप् । ४ भुरिक् पङ्क्तिः । ५ पङ्क्ति ॥ स्वरः–१–३, ६–१३ धैवतः । ४, ५ पञ्चमः ॥

॥ १०८ ॥ य इन्द्राग्नी चित्रतमो रथो वामभि विश्वानि भुवनानि चष्टे ।
[ते]ना यातं सरथं तस्थिवांसाथा सोमस्य पिबतं सुतस्य ॥ १ ॥ यावदिदं भुवनं
[वि]श्वमस्त्युरुव्यचा वरिमता गभीरम् । तावाँ अयं पातवे सोमो अस्त्वरमिन्द्राग्नी
[म]नसे युवभ्याम् ॥ २ ॥ चक्राथे हि सध्र्य१ङ्नाम भद्रं सध्रीचीना वृत्रहणा उत
[स्थ]ः । ताविन्द्राग्नी सध्र्यञ्चा निषद्या वृष्णः सोमस्य वृषणा वृषेथाम् ॥ ३ ॥
[स]मिद्धेष्वग्निष्वानजाना यतस्रुचा बर्हिरु तिस्तिराणा । तीव्रैः सोमैः परिषिक्तेभि-
[र]र्वागेन्द्राग्नी सौमनसाय यातम् ॥ ४ ॥ यानीन्द्राग्नी चक्रथुर्वीर्याणि यानि रू-
[प]ाण्युत वृष्ण्यानि । या वां प्रत्नानि सख्या शिवानि तेभिः सोमस्य पिबतं सु-
[त]स्य ॥ ५ ॥ २६ ॥ यदब्रवं प्रथमं वां वृणानो३ऽयं सोमो असुरैर्नो विहव्यः । तां

सत्यां श्रद्धामभ्या हि यातमथा सोमस्य पिबतं सुतस्य ॥ ६ ॥ यदिन्द्राग्नी मद
स्वे दुरोणे यद्ब्रह्मणि राजनि वा यजत्रा । अतः परि वृषणावा हि यातमथा
मस्य पिबतं सुतस्य ॥ ७ ॥ यदिंद्राग्नी यदुषु तुर्वशेषु यद्द्रुह्युष्वनुषु पूरुषु स्थ
अतः परि वृषणा वा हि यातमथा सोमस्य पिबतं सुतस्य ॥ ८ ॥ यदिन्द्रा
अवमस्यां पृथिव्यां मध्यमस्यां परमस्यां मुत स्थः । अतः परि वृषणावा हि य
मथा सोमस्य पिबतं सुतस्य ॥ ६ ॥ यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्
मवमस्यामुत स्थः । अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥१
यदिंद्राग्नी दिवि ष्ठो यत्पृथिव्यां यत्पर्वतेष्वोषधीष्वप्सु । अतः परि वृषणावा
यातमथा सोमस्य पिबतं सुतस्य ॥ ११ ॥ यदिन्द्राग्नी उदिता सूर्यस्य म
दिवः स्वधया मादयेथे । अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सु
स्य ॥ १२ ॥ एवेन्द्राग्नी पपिवांसा सुतस्य विश्वास्मभ्यं सं जयतं धनानि । त
मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १३ ॥ २७ ॥

॥ १०६ ॥ १–८ कुत्स आङ्गिरस ऋषिः ॥ इन्द्राग्नी देवते ॥ छन्दः–
३, ४, ६, ८ निचृत् त्रिष्टुप् । २, ५ त्रिष्टुप् । ७ विराट् त्रिष्टुप् ॥ धैवतः स्वरः

॥ १०६ ॥ वि ह्यख्यं मनसा वस्य इच्छन्निन्द्राग्नी ज्ञास उत वा सजातान्
नान्या युवत्प्रमतिरस्ति मह्यं स वां धियं वाजयन्तीमतक्षम् ॥ १ ॥ अश्रवं हि
रिदावत्तरा वां विजामातुरुत वा घा स्यालात् । अथा सोमस्य प्रयती युवभ्या
न्द्राग्नी स्तोमं जनयामि नव्यम् ॥ २ ॥ मा च्छेद्म रश्मीँरिति नाधमानाः पितॄ
शक्तीरनुयच्छमानाः । इन्द्राग्निभ्यां कं वृषणो मदन्ति ता ह्यद्री धिषणाया उ
स्थे ॥ ३ ॥ युवाभ्यां देवी धिषणा मदायेन्द्राग्नी सोममुशती सुनोति । तावश्वि
भद्रहस्ता सुपाणी आ धावतं मधुना पृङ्क्तमप्सु ॥ ४ ॥ युवामिन्द्राग्नी वसु नो
भागे तवस्तमा शुश्रव वृत्रहत्ये । तावासद्या बर्हिषि यज्ञे अस्मिन्प्र चर्षणी मादये
सुतस्य ॥ ५ ॥ २८ ॥ प्र चर्षणिभ्यः पृतनाहवेषु प्र पृथिव्या रिरिचाथे दिवश्च
प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या ॥ ६ ॥ आ भर
शिक्षतं वज्रबाहू अस्माँ इन्द्राग्नी अवतं शचीभिः । इमे नु ते रश्मयः सूर्यस्य येभि
सपित्वं पितरो न आसन् ॥ ७ ॥ पुरंदरा शिक्षतं वज्रहस्तास्माँ इन्द्राग्नी अव
भरेषु । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ८ ॥ २९

॥ ११० ॥ १–६ कुत्स आङ्गिरस ऋषिः ॥ ऋभवो देवता ॥ छन्दः—

जगती । २, ३, ७ विराड् जगती । ६, ८ निचृज्जगती । ५ निचृत्त्रिष्टुप् । ६
ष्टुप् ॥ स्वरः—१-४, ६-८ निषादः । ५, ६ धैवतः ॥

॥ ११० ॥ तृतं मे अपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते ।
यं समुद्र इह विश्वदेव्यः स्वाहाकृतस्य समु तृप्णुत ऋभवः ॥ १ ॥ आभोगयं प्र य-
च्छन्त एतनापाकाः प्राञ्चो मम के चिदापयः । सौधन्वनासश्चरितस्य भूमनाग-
त सवितुर्दाशुषो गृहम् ॥२॥ तत्सविता वोऽमृतत्वमासुवदगोह्यं यच्छ्रवयन्त एतन ।
चिच्चमसमसुरस्य भक्षणमेकं सन्तमकृणुता चतुर्वयम् ॥३॥ विष्ट्वी शमी तरणि-
र्वाघतो मर्तासः सन्तो अमृतत्वमानशुः । सौधन्वना ऋभवः सूरचक्षस सं-
रे समपृच्यन्त धीतिभिः ॥ ४ ॥ क्षेत्रमिव वि ममुस्तेजनेनँ एकं पात्रमृभवो जे-
नम् । उपस्तुता उपमं नाधमाना अमर्त्येषु श्रव इच्छमानाः ॥ ५ ॥ ३० ॥ आ
षामन्तरिक्षस्य नृभ्यः स्रुचेव घृतं जुहवाम विद्मना । तरणित्वाये पितुरस्य स-
र ऋभवो वाजमरुहन्दिवो रजः ॥ ६ ॥ ऋभुर्न इन्द्रः शवसा नवीयानृभुर्वा-
भिर्वसुभिर्वसुर्ददिः । युष्माकं देवा अवसाहनि प्रियेऽभि तिष्ठेम पृत्सुतीरसुन्वताम्
॥ ७ ॥ मिश्चर्मण ऋभवो गामपिंशत सं वत्सेनासृजता मातरं पुनः । सौधन्वनासः
स्यया नरो जिव्री युवाना पितराकृणोतन ॥ ८ ॥ वाजेभिर्नो वाजसातावविड्-
भुमाँ इन्द्र चित्रमा दर्षि राधः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः
वी उत द्यौः ॥ ९ ॥ ३१ ॥

॥ १११ ॥ १-५ कुत्स आङ्गिरसः ऋषिः ॥ ऋभवो देवता ॥ छन्दः-१-४
ती । ५ त्रिष्टुप् ॥ स्वरः-१-४ निषादः । ५ धैवतः ॥

॥ १११ ॥ तक्षन्रथं सुवृतं विद्मनापसस्तक्षन्हरी इन्द्रवाहा वृषण्वसू । तक्ष-
तृभ्यामृभवो युवद्वयस्तक्षन्वत्साय मातरं सचाभुवम् ॥ १ ॥ आ नो यज्ञाय त-
ऋभुमद्वयः क्रत्वे दक्षाय सुप्रजावतीमिषम् । यथा क्षयाम सर्ववीरया विशा
: शर्धाय धासथा स्विन्द्रियम् ॥२॥ आ तक्षत सातिमस्मभ्यमृभवः सातिं रथाय
तिमर्वते नरः । सातिं नो जैत्रीं सं महेत विश्वहा जामिमजामिं पृतनासु सक्ष-
म् ॥ ३ ॥ ऋभुक्षणमिन्द्रमा हुव ऊतय ऋभून्वाजान्मरुतः सोमपीतये । उभा
ावरुणा नूनमश्विना ते नो हिन्वन्तु सातये धिये जिषे ॥ ४ ॥ ऋभुर्भराय सं
ातु सातिं समर्यजिद्वाजो अस्माँ अविष्टु । तन्नो मित्रो वरुणो मामहन्तामदितिः
न्धुः पृथिवी उत द्यौः ॥ ५ ॥ ३२ ॥

॥ ११२ ॥ १–२५ कुत्स अङ्गिरस ऋषिः ॥ आदिमे मन्त्रे प्रथमपादस्य
द्यावापृथिव्यौ द्वितीयस्य अग्निः शिष्टस्य सूक्तस्याश्विनौ देवते ॥ छन्दः– १,
६, ७, १३, १५, १७, १८, २०, २१, २२ निचृज्जगती । ४, ८, ६,
१२, १४, १६, २३ जगती । १६ विराड् जगती । ३, ५, २४ विराट् त्रि
१० भुरिक् त्रिष्टुप् । २५ त्रिष्टुप् च ॥ स्वरः–१, २, ४, ६–६, ११–२३ निषा
३, ५, १०, २४, २५ धैवतः ॥

॥ ११२ ॥ ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये । य
भरेकारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम् ॥ १ ॥ युवोर्दानाय
भरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे । याभिर्धियोऽवथः कर्मन्निष्टये ता
षु ऊतिभिरश्विना गतम् ॥ २ ॥ युवं तासां दिव्यस्य प्रशासने विशां क्षयथो
मृतस्य मज्मना । याभिर्धेनुमस्वं पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना
॥ ३ ॥ याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति । य
स्त्रिमन्तुरभवद्विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतम् ॥ ४ ॥ याभी रेभं
वृतं सितमद्भ्य उदन्दनमैरयतं स्वर्दृशे । याभिः कण्वं प्र सिषासन्तमावतं ता
षु ऊतिभिरश्विना गतम् ॥ ५ ॥ ३३ ॥ याभिरन्तकं जसमानमारणे भुज्युं
भिरव्यथिभिर्जिजिन्वथुः । याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु ऊति
श्विना गतम् ॥ ६ ॥ याभिः शुचन्तिं धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्र
याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ७ ॥ या
शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः । याभिर्वर्तिकां ग्रसि
ममुञ्चतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ८ ॥ याभिः सिन्धुं मधुमन्तमस
वसिष्ठं याभिरजरावजिन्वतम् । याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊ
भिरश्विना गतम् ॥ ६ ॥ याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजाव
न्वतम् । याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १
॥ ३४ ॥ याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्ष
कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ११ ॥ य
रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे । याभिस्त्रिशोक उ
उदाजत ताभिरू षु ऊतिभिरश्विना गतम् ॥ १२ ॥ याभिः सूर्यं परियाथः
वति मन्धातारं क्षैत्रपत्येष्वावतम् । याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊ
भिरश्विना गतम् ॥ १३ ॥ याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शंबरहत्य

म् । याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १४ ॥
भिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः । याभिर्व्यश्वमुत
मावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १५ ॥ ३५ ॥ याभिर्नरा शयवे या-
त्रये याभिः पुरा मनवे गातुमीषथुः । याभिः शारीराजतं स्यूमरश्मये ताभि-
षु ऊतिभिरश्विना गतम् ॥ १६ ॥ याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदे-
इद्धो अज्मन्ना । याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना
म् ॥ १७ ॥ याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः ।
भिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १८ ॥ याभिः
ीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम् । याभिः सुदास ऊहथुः
व्यं१न्ताभिरू षु ऊतिभिरश्विना गतम् ॥ १९ ॥ याभिः शंताती भवथो ददा-
भुज्युं याभिरवथो याभिरध्रिगुम् । ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु
तिभिरश्विना गतम् ॥ २० ॥ ३६ ॥ याभिः कृशानुमसने दुवस्यथो जवे या-
यूनो अर्वन्तमावतम् । मधु प्रियं भरथो यत्सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना
म् ॥ २१ ॥ याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः ।
भी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतम् ॥ २२ ॥ याभिः
समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम् । याभिर्ध्वसन्तिं पुरुषन्ति-
तं ताभिरू षु ऊतिभिरश्विना गतम् ॥ २३ ॥ अप्नस्वतीमश्विना वाचमस्मे
नो दस्रा वृषणा मनीषाम् । अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वा-
तौ ॥ २४ ॥ द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः । तन्नो
ो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ २५ ॥ ३७ ॥ ७ ॥

॥ ११३ ॥ १–२० कुत्स आङ्गिरस ऋषिः ॥ १–२० उषा देवता ।
ीयस्यार्द्धर्चस्य रात्रिरपि ॥ छन्दः—१, ३, ६, १२, १७ निचृत् त्रिष्टुप् । ६
ष्टुप् । ७, १८–२० विराड् त्रिष्टुप् । २, ५ स्वराट् पङ्क्तिः । ४, ८, १०, ११,
, १६ भुरिक् पङ्क्तिः । १३, १४ निचृत्पङ्क्तिः ॥ स्वरः—१, ३, १२, ६,
६, १७–२० धैवतः । २, ५, ४, ८, १०, ११, १३–१६ पञ्चमः ॥

॥ ११३ ॥ इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥ १ ॥ रुशद्वत्सा रुशती
्यागादारैगु कृष्णा सदनान्यस्याः । समानबन्धू अमृते अनूची द्यावा वर्णं

चरत आमिनाने ॥ २ ॥ समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशि
न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥ ३ ॥ भास्वती
सूनृतानामचेति चित्रा वि दुरो न आवः । प्राप्या जगद्व्यु नो रायो अख्य
अजीगर्भुवनानि विश्वा ॥ ४ ॥ जिह्मश्ये चरितवे मघोन्याभोगय इष्टये रा
त्वं । दभ्रं पश्यद्भ्य उर्विया विचक्ष उषा अजीगर्भुवनानि विश्वा ॥ ५ ॥
क्षत्राय त्वं श्रवसे त्वं महीया इष्टये त्वमर्थमिव त्वमित्यै । विसदृशा जीविता
प्रचक्ष उषा अजीगर्भुवनानि विश्वा ॥ ६ ॥ एषा दिवो दुहिता प्रत्यदर्शि
च्छन्ती युवतिः शुक्रवासाः । विश्वस्येशाना पार्थिवस्य वस्व उषो अद्येह सु
व्युच्छ ॥ ७ ॥ परायतीनामन्वेति पाथ आयतीनां प्रथमा शश्वतीनाम् । व्यु
न्ती जीवमुदीरयन्त्युषा मृतं कं चन बोधयन्ती ॥ ८ ॥ उषो यदग्निं समिधे च
वि यदावश्चक्षसा सूर्यस्य । यन्मानुषान्यक्ष्यमाणाँ अजीगस्तद्देवेषु चकृषे भद्र
॥ ९ ॥ कियात्या यत्समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् । अनु
कृपते वावशाना प्रदीध्याना जोषमन्याभिरेति ॥ १० ॥ २ ॥ ईयुष्टे ये पूर्व
मपश्यन्व्युच्छन्तीमुषसं मर्त्यासः । अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति
अपरीषु पश्यान् ॥ ११ ॥ यावयद्द्वेषा ऋतपा ऋतेजाः सुम्नावरी सूनृता
न्ती । सुमङ्गलीर्बिभ्रती देववीतिमिहाद्योषः श्रेष्ठतमा व्युच्छ ॥ १२ ॥ शश्
रोषा व्युवास देव्यथो अद्येदं व्यावो मघोनी । अथो व्युच्छादुत्तराँ अनु द्
रामृता चरति स्वधाभिः ॥ १३ ॥ व्यञ्जिभिर्दिव आतास्वद्यौदप कृष्णां
र्णिजं देव्यावः । प्रबोधयन्त्यरुणेभिरश्वैरोषा याति सुयुजा रथेन ॥ १४ ॥
वहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना ईयुषीणामुपमा शश्व
विभातीनां प्रथमोषा व्यश्वैत् ॥ १५ ॥ ३ ॥ उदीर्ध्वं जीवो असुर्न आगादप
गात्तम आ ज्योतिरेति । आरैक्पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त
॥ १६ ॥ स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः ।
तदुच्छ गृणते मघोन्यस्मे आयुर्नि दिदीहि प्रजावत् ॥ १७ ॥ या गोमतीः
सर्ववीरा व्युच्छन्ति दाशुषे मर्त्याय । वायोरिव सूनृतानामुदर्के ता अश्वदा
वत्सोमसुत्वा ॥ १८ ॥ माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भा
प्रशस्तिकृद्ब्रह्मणे नो व्युच्छा नो जने जनय विश्ववारे ॥ १९ ॥ यच्चित्रमप्न
वहन्तीजानाय शशमानाय भद्रम् । तन्नो मित्रो वरुणो मामहन्तामदितिः
पृथिवी उत द्यौः ॥ २० ॥ ४ ॥

॥ ११४ ॥ १-११ कुत्स आङ्गिरस ऋषिः ॥ रुद्रो देवता ॥ छन्दः—१
ती । २, ७ निचृज्जगती । ३, ६, ८, ९ विराड् जगती च । १०, ४, ५, ११
रेक् त्रिष्टुप् निचृत् त्रिष्टुप् ॥ स्वरः—१—३, ६—९ निषादः । ४, ५, १०,
१ धैवतः ॥

॥ ११४ ॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः । यथा
मसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ १ ॥ मृळा नो रुद्रोत नो
स्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायेजे पिता तदश्याम
रुद्र प्रणीतिषु ॥ २ ॥ अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र-
द्वः । सुम्नायन्निद्विशो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः ॥ ३ ॥ त्वेषं
यं रुद्रं यज्ञसाधं वंकुं कविमवसे नि ह्वयामहे । आरे अस्मद्दैव्यं हेळो अस्यतु सुम-
मिद्वयमस्या वृणीमहे ॥ ४ ॥ दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा नि
यामहे । हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म छर्दिरस्मभ्यं यंसत् ॥ ५ ॥ ५ ॥
दं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् । रास्वा च नो अ-
त मर्तभोजनं त्मने तोकाय तनयाय मृळ ॥ ६ ॥ मा नो महान्तमुत मा नो अ-
कं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं मा नः
यास्तन्वो रुद्र रीरिषः ॥ ७ ॥ मा नस्तोके तनये मा न आयौ मा नो गोषु मा
अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे
८ ॥ उप ते स्तोमान्पशुपा इवाकरं रास्वा पितर्मरुतां सुम्नमस्मे । भद्रा हि ते
मतिर्मृळयत्तमाथा वयमव इत्ते वृणीमहे ॥ ९ ॥ आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर
म्नमस्मे ते अस्तु । मृळा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विब-
ः ॥ १० ॥ अवोचाम नमो अस्मा अवस्यवः शृणोतु नो हवं रुद्रो मरुत्वान् ।
नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ११ ॥ ६ ॥

॥ ११५ ॥ १—६ कुत्स आङ्गिरस ऋषिः ॥ सूर्यो देवता ॥ छन्दः—१,
, ६ निचृत् त्रिष्टुप् । ३ विराट् त्रिष्टुप् । ४, ५ त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ ११५ ॥ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्या-
पृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ १ ॥ सूर्यो देवीमुषसं रोचमानां
र्यो न योषामभ्येति पश्चात् । यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय
द्रम् ॥ २ ॥ भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः । नमस्यन्तो

दि॒व आ पृ॒ष्ठम॑स्थुः॒ परि॒ द्यावा॑पृथि॒वी य॑न्ति स॒द्यः ॥३॥ तत्सूर्य॑स्य दे॒व॒त्वं तन्म॑हि॒
म॒ध्या कर्तो॒र्वित॑तं॒ सं ज॑भार । य॒देदयु॑क्त ह॒रितः॑ स॒धस्था॒दाद्रात्री॒ वास॑स्तनुते
मस्मै॑ ॥ ४ ॥ तन्मि॒त्रस्य॒ वरु॑णस्याभि॒चक्षे॒ सूर्यो॑ रू॒पं कृ॑णुते॒ द्योरु॒पस्थे॑ । अन॒
म॒न्यद्रु॒शद॑स्य॒ पाजः॑ कृ॒ष्णम॒न्यद्ध॒रित॒: सं भ॑रन्ति ॥ ५ ॥ अ॒द्या दे॑वा॒ उदि॑ता
र्य॑स्य॒ निरंह॑सः पिपृ॒ता निर॑व॒द्यात् । तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सि
पृथि॒वी उ॒त द्यौः ॥ ६ ॥ ७ ॥ १६ ॥

॥ ११६ ॥ १—२५ कक्षीवानृषिः ॥ अश्विनौ देवते ॥ छन्दः—१,
२२, २३ विराट् त्रिष्टुप् । २, ८, ६, १२, १३, १४, १५, १८, २०,
२५ निचृत् त्रिष्टुप् । ३, ४, ५, ७, २१ त्रिष्टुप् । ६, १६, १६ भुरिक् पङ्क्ति
११ पङ्क्तिः । १७ स्वराट् पङ्क्तिः ॥ स्वरः—१—५, ७—१०, १२—
१८, २०—२५ धैवतः । ६, ११, १६, १७, १६ पञ्चमः ॥

॥ ११६ ॥ नास॑त्याभ्यां ब॒र्हिरि॑व॒ प्र वृ॑ञ्जे॒ स्तोमाँ॑ इयर्म्य॒भ्रियेव॒ वात॒
याव॒र्भगा॑य वि॒मदा॑य जा॒यां से॑ना॒जुवा॒ न्यू॑हतू॒ रथे॑न ॥ १ ॥ वी॒ळुप॒त्मभि॑राशुहे॒
भिर्वा॑ दे॒वानां॑ वा जू॒तिभि॒: शाश॑दाना । तद्रास॑भो नासत्या स॒हस्र॑मा॒जा य॒म
प्र॒धने॑ जिगाय ॥ २ ॥ तुग्रो॑ ह भु॒ज्युम॑श्विनोदमे॒घे र॒यिं न कश्चि॑न्ममृ॒वाँ अवा॑हा
तमू॑हथुर्नौ॒भिरा॑त्म॒न्वती॑भिरन्तरि॒क्षप्रुद्भि॒रपो॑दकाभिः ॥ ३ ॥ ति॒स्रः क्षप॒स्त्रिरहा॑
व्रज॑द्भि॒र्नास॑त्या भु॒ज्युमू॑हथुः पत॒ङ्गैः । स॒मु॒द्रस्य॒ धन्व॑न्ना॒र्द्रस्य॑ पा॒रे त्रि॒भी रथै॑ः श॒
पद्भि॒: षळ॑श्वैः ॥ ४ ॥ अ॒ना॒र॒म्भ॒णे तद॑वीरयेथामनास्था॒ने अ॑ग्रभ॒णे स॑मु॒द्रे ।
द॑श्विना ऊ॒हथु॑र्भु॒ज्युमस्तं॑ श॒तारि॑त्रां॒ नाव॑मातस्थि॒वांस॑म् ॥ ५ ॥ ८ ॥ यम॑श्वि
द॒दथु॑: श्वे॒तमश्व॑म॒घाश्वा॑य॒ शश्व॒दित्स्व॒स्ति । तद्वां॑ दा॒त्रं महि॑ की॒र्तेन्यं॑ भूत्पै॒द्वो वा॒
स॒द॒मिद्धव्यो॑ अ॒र्यः ॥ ६ ॥ यु॒वं न॑रा स्तुव॒ते प॑ज्रि॒याय॑ क॒क्षीव॑ते अरदतं॒ पुरं॑धि
म् । का॒रो॒त॒राच्छ॒फादश्व॑स्य॒ वृष्ण॑: श॒तं कु॒म्भाँ अ॑सिञ्चतं॒ सुरा॑याः ॥ ७ ॥ हि॒
ना॒ग्निं घ्रं॒सम॑वारयेथां पि॒तुम॑ती॒मूर्ज॑मस्मा अधत्तं । ऋ॒बीसे॒ अत्रि॑मश्वि॒नाव॑नीत॒मुन्नि
न्यथु॒: सर्व॑गणं स्व॒स्ति ॥ ८ ॥ परा॑व॒तं ना॑सत्यानुदेथामु॒च्चाबु॑ध्नं चक्रथुर्जि॒ह्मबा॑रम्
क्षर॒न्नापो॒ न पा॒यना॑य रा॒ये स॒हस्रा॑य॒ तृष्य॑ते॒ गोत॑मस्य ॥९॥ जुजु॒रुषो॑ नासत्यो॒
व॒व्रिं प्रामु॑ञ्चतं द्रा॒पिमि॑व॒ च्यवा॑नात् । प्राति॑रतं जहि॒तस्यायु॑र्दस्रा॒दित्पति॑मकृणु॒
क॒नीना॑म् ॥ १० ॥ ६ ॥ तद्वां॑ नरा॒ शंस्यं॒ राध्यं॑ चाभि॒ष्टिम॑न्नासत्या॒ वरू॑थम्
यद्वि॒द्वांसा॑ नि॒धिमि॒वाप॑गूळ्ह॒मुद्द॑र्श॒तादू॒पथु॒र्वन्द॑नाय ॥ ११ ॥ तद्वां॑ नरा स॒नये॒ दं

प्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्। दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा
यदीमुवाच ॥ १२ ॥ अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंन्धिः।
तं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तम् ॥ १३ ॥ आस्नो वृकस्य
वर्तिकामभीके युवं नरा नासत्यामुमुक्तम्। उतो कविं पुरुभुजा युवं ह कृपमा-
मकृणुतं विचक्षे ॥ १४ ॥ चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परित-
म्यायाम्। सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ॥ १५ ॥
० ॥ शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार। तस्मा अक्षी नासत्या
विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥ १६ ॥ आ वां रथं दुहिता सूर्यस्य का-
र्ष्मेवातिष्ठदर्वता जयन्ती। विश्वे देवा अन्वमन्यन्त हृद्भिः समु श्रिया नासत्या
सचेथे ॥ १७ ॥ यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता। रेवदुवाह
सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥ १८ ॥ रयिं सुक्षत्रं स्वपत्यमायुः
सुवीर्यं नासत्या वहन्ता। आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातम्
॥ १९ ॥ परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः। विभिन्दुना
नासत्या रथेन वि पर्वताँ अजरयू अयातम् ॥ २० ॥ ११ ॥ एकस्या वस्तोरावतं
रणाय वशमश्विना सनये सहस्रा। निरहतं दुच्छुना इन्द्रवन्ता पृथुश्रवसो वृष-
णावरातीः ॥ २१ ॥ शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः।
शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ॥ २२ ॥ अवस्यते स्तुवते कृ-
ष्णियाय ऋजूयते नासत्या शचीभिः। पशुं न नष्टमिव दर्शनाय विष्णाप्वं दद-
थुर्विश्वकाय ॥ २३ ॥ दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्वन्तः। वि-
प्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण ॥ २४ ॥ प्र वां दंसांस्यश्विनाव-
वोचमस्य पतिः स्यां सुगवः सुवीरः। उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं
जगम्याम् ॥ २५ ॥ १२ ॥

॥ ११७ ॥ १–२५ कक्षीवानृषिः ॥ अश्विनौ देवते ॥ छन्दः—१ निचृत् पङ्क्तिः।
६, २२ विराट् पङ्क्तिः। २१, २५, ११ भुरिक् पङ्क्तिः। २, ४, ७, १२, १६, १७,
१८, १९ निचृत् त्रिष्टुप्। ८, ९, १०, १३—१५, २०, २३ विराट् त्रिष्टुप्। ३,
५, २४ त्रिष्टुप् ॥ स्वरः—१, ६, ११, २१, २२, २५ पञ्चमः। २–५ ७–१०,
१२–२०, २३, २४ धैवतः ॥

॥ ११७ ॥ मध्वः सोमस्याश्विना मदाय प्रत्नो होता विवासते वां। बर्हिष्मती

रातिर्विश्रिता गीरिषा यातं नासत्योप वाजैः ॥ १ ॥ यो वामश्विना मनसो ज
यात्रथः स्वश्वो विश आजिगाति । येन गच्छथः सुकृतो दुरोणं तेन नरा व
रस्मभ्यं यातम् ॥ २ ॥ ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन
मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता ॥ ३ ॥ अश्वं न गू
मश्विना दुरेवैरृषिं नरा वृषणा रेभमप्सु । सं तं रिणीथो विप्रुतं दंसोभिर्न
जूर्यन्ति पूर्व्या कृतानि ॥ ४ ॥ सुषुप्वांसं न निरृतेरुपस्थे सूर्यं न दस्रा तम
क्षियन्तम् । शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वन्दनाय ॥ ५ ॥ १३
तद्वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन् । शफादश्वस्य वाजि
जनाय शतं कुम्भाँ असिञ्चतं मधूनाम् ॥ ६ ॥ युवं नरा स्तुवते कृष्णियाय वि
ष्णाप्वं ददथुर्विश्वकाय । घोषायै चित्पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावद
॥ ७ ॥ युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय । प्रवाच्यं त
षणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥ ८ ॥ पुरू वर्पांस्यश्विना दधाना
पेदव ऊहथुराशुमश्वम् । सहस्रसां वाजिनमप्रतीतमहिहनं श्रवस्य१न्तरुत्रम् ॥ ९
एतानि वां श्रवस्या सुदानू ब्रह्माङ्गूषं सदनं रोदस्योः । यद्वां पज्रासो अश्वि
हवन्ते यातमिषा च विदुषे च वाजं ॥ १० ॥ १४ ॥ सूनोर्मानेनाश्विना गृणा
वाजं विप्राय भुरणा रदन्ता । अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्
रिणीतम् ॥ ११ ॥ कुह यान्ता सुष्टुतिं काव्यस्य दिवो नपाता वृषणा शयुत्रा
हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन् ॥ १२ ॥ युवं च्यवानमश्वि
जरन्तं पुनर्युवानं चक्रथुः शचीभिः । युवो रथं दुहिता सूर्यस्य सह श्रिया ना
त्यावृणीत ॥ १३ ॥ युवं तुग्राय पूर्व्येभिरेवैः पुनर्मन्यावभवतं युवाना । युवं
ज्युमर्णसो निः समुद्राद्विभिरूहथुर्ऋज्रेभिरश्वैः ॥ १४ ॥ अजोहवीदश्विना तौग्र
वां प्रोळ्हः समुद्रमव्यथिर्जगन्वान् । निष्टमूहथुः सुयुजा रथेन मनोजवसा वृष
स्वस्ति ॥ १५ ॥ १५ ॥ अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य । वि
युषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण ॥ १६ ॥ शतं मेषान्वृक्ये मामहानं त
प्रणीतमशिवेन पित्रा । आक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुर्विच
॥ १७ ॥ शुनमन्धाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति । जारः कनीन इव च
दान ऋज्राश्वः शतमेकं च मेषान् ॥ १८ ॥ मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण
सं रिणीथः । अथा युवामिदह्वयत्पुरंधिरागच्छतं सीं वृषणाववोभिः ॥ १९ ॥ अध
दस्रा स्तर्य१न्विषक्तामपिन्वतं शयवे अश्विना गाम् । युवं शचीभिर्विमदाय जायांन्य

हमित्रस्य योषाम् ॥ २० ॥ १६ ॥ यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय
। अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ॥ २१ ॥ आथर्वणा-
विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् । स वां मधु प्र वोचदृतायन्त्वाष्ट्रं यद्द-
पिकक्ष्यं वाम् ॥ २२ ॥ सदा कवी सुमतिमा चके वां विश्वा धियो अश्वि-
ावतं मे । अस्मे रयिं नासत्या बृहन्तमपत्यसाचं श्रुत्यं रराथाम् ॥ २३ ॥
यहस्तमश्विना रराणा पुत्रं नरा वध्रिमत्या अदत्तम् । त्रिधा ह श्यावमश्वि-
र्कस्तमुज्जीवसं ऐरयतं सुदानू ॥ २४ ॥ एतानि वामश्विना वीर्याणि प्र पूर्व्या-
यवोऽवोचन् । ब्रह्म कृण्वन्तो वृषणा युवभ्यां सुवीरासो विदथमा वदेम
५ ॥ १७ ॥

॥ ११८ ॥ १–११ कक्षीवानृषिः ॥ अश्विनौ देवते ॥ छन्दः–१, ११ भुरिक्
। २, ५, ७ त्रिष्टुप् । ३, ६, ९, १० निचृत्त्रिष्टुप् । ४, ८ विराट् त्रिष्टुप् ॥
– १, ११, पञ्चमः । २–१० धैवतः ॥

॥ ११८ ॥ आ वां रथो अश्विना श्येनपत्वा सुमृळीकः स्ववां यात्वर्वाङ् ।
र्त्यस्य मनसो जवीयान्त्रिवन्धुरो वृषणा वातरंहाः ॥ १ ॥ त्रिवन्धुरेण त्रि-
रथेन त्रिचक्रेण सुवृता यातमर्वाक् । पिन्वतं गा जिन्वतमर्वतो नो वर्धयतम-
ा वीरमस्मे ॥ २ ॥ प्रवद्यामना सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।
ङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥ ३ ॥ आ वां श्ये-
ं अश्विना वहन्तु रथे युक्तास आशवः पतङ्गाः । ये अप्तुरो दिव्यासो न-
अभि प्रयो नासत्या वहन्ति ॥ ४ ॥ आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी न-
हिता सूर्यस्य । परि वामश्वा वपुषः पतङ्गा वयो वहन्त्वरुषा अभीके
॥ १८ ॥ उद्वन्दनमैरतं दंसनाभिरुद्रेभं दस्रा वृषणा शचीभिः । निष्टौग्र्यं
थः समुद्रात्पुनश्च्यवानं चक्रथुर्युवानम् ॥ ६ ॥ युवमत्रयेऽवनीताय तप्तमूर्ज-
नमश्विनावधत्तम् । युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा
॥ युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय । अमुञ्चतं वर्तिका-
 निः प्रति जङ्घां विश्पलाया अधत्तम् ॥ ८ ॥ युवं श्वेतं पेदव इन्द्रजूतम-
मश्विनादत्तमश्वम् । जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीड्वङ्गम् ॥ ९ ॥
ां नरा स्ववसे सुजाता हवामहे अश्विना नाधमानाः । आ न उप वसुमता
गिरो जुषाणा सुविताय यातम् ॥ १० ॥ आ श्येनस्य जवसा नूतनेनास्मे

यातं नासत्या सजोषाः । हवे हि वामश्विना रातहव्यः शश्वत्तमाया
व्युष्टौ ॥ ११ ॥ १६ ॥

॥ ११६ ॥ १-१० कक्षीवान्दैर्घतमसऋषिः ॥ अश्विनौ देवते ॥ छन्द
४, ६ निचृज्जगती । ३, ७, १० जगती । ८ विराड्जगती । २, ५, ९
त्रिष्टुप् ॥ स्वरः-१, ४, ६-८, ३, १० निषादः । २, ५, ९ धैवतः ॥

॥ ११६ ॥ आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियं जीवसे हुवे
हस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवानं वरिवोधामभि प्रयः ॥ १ ॥ ऊर्ध्वा धीति
त्यस्य प्रयामन्यधायि शस्मन्त्समयन्त आ दिशः । स्वदामि घर्मं प्रति यन्त्यूत
वामूर्जानी रथमश्विनारुहत् ॥ २ ॥ सं यन्मिथः पस्पृधानासो अग्मत शुभे
अमिता जायवो रणे । युवोरह प्रवणे चेकिते रथो यदश्विना वहथः सूरि
॥ ३ ॥ युवं भुज्युं भुरमाणं विभिर्गतं स्वयुक्तिभिर्निवहन्ता पितृभ्य आ ।
वर्तिर्वृषणा विजेन्यन्१दिवोदासाय महि चेति वामवः ॥ ४ ॥ युवोरश्विना
युवायुजं रथं वाणी येमतुरस्य शर्ध्यम् । आ वां पतित्वं सख्याय जग्मुषी
णीत जेन्या युवां पती ॥ ५ ॥ २० ॥ युवं रेभं परिषूतेरुरुष्यथो हिमेन घर्म
तप्तमत्रये । युवं शयोरवसं पिप्यथुर्गवि प्र दीर्घेण वन्दनस्तार्यायुषा ॥ ६
वन्दनं निर्ऋतं जरण्यया रथं न दस्रा करणा समिन्वथः । क्षेत्रादा विप्रं
विपन्यया प्र वामत्र विधते दंसना भुवत् ॥ ७ ॥ अगच्छतं कृपमाणं परावति
तुः स्वस्य त्यजसा निबाधितम् । स्वर्वतीरित ऊतीर्युवोरह चित्रा अभीके अ
भिष्टयः ॥ ८ ॥ उत स्या वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति
दध्यङ्चो मन आ विवासथोऽथा शिरः प्रति वामश्व्यं वदत् ॥ ९ ॥ युवं पे
रुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः । शर्यैरभिद्युं पृतनासु दुष्टरं च
मिन्द्रमिव चर्षणीसहम् ॥ १० ॥ २१ ॥

॥ १२० ॥ १—१२ औशिजपुत्रः कक्षीवानृषिः ॥ अश्विनौ दे
छन्दः-१ । १२ पिपीलिकामध्या निचृद्गायत्री । २ भुरिग्गायत्री । १० ग
११ पिपीलिकामध्याविराड्गायत्री । ३ स्वराट् ककुबुष्णिक् । ५ आर्ष्युष्णि
६ विराडार्ष्युष्णिक् । ८ भुरिगुष्णिक् । ४ आर्ष्यनुष्टुप् । ७ स्वराडार्ष्यनुष्टु
भुरिगनुष्टुप् ॥ स्वरः-१, २, १०-१२ षड्जः । ३, ५, ६, ८ ऋषभः ।
९ गान्धारः ॥

॥ १२० ॥ का राधद्धोत्राश्विना वां को वां जोष उभयोः । कथा विधात्य-
ाः ॥ १ ॥ विद्वांसाविद्दुरः पृच्छेदविद्वानित्थापरो अचेताः । नू चिन्नु मर्ते
॥ २ ॥ ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य । प्रार्च-
ानो युवाकुः ॥ ३ ॥ वि पृच्छामि पाक्याऽन देवान्वषट्कृतस्याद्भुतस्य दस्रा ।
च सह्यसो युवं च रभ्यसो नः ॥ ४ ॥ प्र या घोषे भृगवाणे न शोभे यया
यजति पज्रियो वाम् । प्रैषयुर्न विद्वान् ॥ ५ ॥ २२ ॥ श्रुतं गायत्रं तकवा-
हं चिद्धि रिरेभाश्विना वाम् । आक्षी शुभस्पती दन् ॥ ६ ॥ युवं ह्यास्तं महो
वा यन्निरततंसतम् । ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः ॥७॥
स्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः । स्तनाभुजो अ-
वीः ॥ ८ ॥ दुहीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै । इषे
ो मिमीतं धेनुमत्यै ॥ ६ ॥ अश्विनोरसनं रथमनश्वं वाजिनीवतोः । तेनाहं
चाकन ॥ १० ॥ अयं समह मा तनूह्याते जनाँ अनु । सोमपेयं सुखो रथः
१ ॥ अध स्वप्नस्य निर्विदेऽभुञ्जतश्च रेवतः । उभा ता बस्रि नश्यतः ॥१२॥
३ ॥ १७ ॥

॥१२१ ॥ १–१५ औशिजः कक्षीवानृषि ॥ विश्वेदेवा इन्द्रश्च देवता ॥
ः–१, ७, १३, भुरिक् पङ्क्तिः । २, ८, १० त्रिष्टुप् । ३, ४, ६, १२ १४,
विराट् त्रिष्टुप् । ५, ६, ११ निचृत् त्रिष्टुप् ॥ स्वरः–१, ७, १३ पञ्चमः ।
, ८–१२, १४, १५ धैवतः ॥

॥ १२१ ॥ कदित्था नॄँः पात्रं देवयतां श्रवद्गिरो अङ्गिरसां तुरण्यन् । प्र य-
द्विश आ हर्म्यस्योरु क्रंसते अध्वरे यजत्रः ॥ १ ॥ स्तम्भीद्ध द्यां स धरुणं
यदृभुर्वाजाय द्रविणं नरो गोः । अनु स्वजां महिषश्चक्षत व्रां मेनामश्वस्य परि
गोः ॥ २ ॥ नक्षद्धवमरुणीः पूर्व्यं राट् तुरो विशामङ्गिरसामनु द्यून् । तक्ष-
नियुतं तस्तम्भद्यां चतुष्पदे नर्याय द्विपादे ॥ ३ ॥ अस्य मदे स्वर्यं दा ऋ-
पीवृतमुस्रियाणामनीकम् । यद्ध प्रसर्गे त्रिककुम्निवर्तदप द्रुहो मानुषस्य दुरो
४ ॥ तुभ्यं पयो यत्पितरावनीतां राधः सुरेतस्तुरणे भुरण्यू । शुचि
रेक्ण आयजन्त सबर्दुघायाः पय उस्रियायाः ॥ ५ ॥ २४ ॥ अध प्र ज-
रर्णिममत्तु प्र रोच्यस्या उषसो न सूरः । इन्दुर्येभिराष्ट स्वेदुहव्यैः स्रुवेण
चञ्जरणाभि धाम ॥ ६ ॥ स्विध्मा यद्वनधितिरपस्यात्सूरो अध्वरे परि रोध-

ना गोः। यद्ध प्रभासि कृत्व्याँ अनु द्यूननर्विंशे पश्विषे तुरायं॥ ७॥ अष्टा
दिव आवो हरी इह द्युम्नासाहमभि योधान उत्सं। हरिं यत्ते मन्दिनं दुक्
गोरभसमद्रिभिर्वाताप्यम्॥ ८॥ त्वमायसं प्रति वर्तयो गोर्दिवो अश्मानमुपनी
भ्वां। कुत्साय यत्र पुरुहूत वन्वञ्छुष्णमनन्तैः परियासि वधैः॥ ९॥ पुरा
रस्तमसो अपीतेस्तमद्रिवः फलिगं हेतिमस्य। शुष्णस्य चित्परिहितं यदोजो
वस्परि सुग्रथितं तदादः॥ १०॥ २५॥ अनु त्वा मही पाजसी अचक्रे द्य
चामा मदतामिन्द्र कर्मन्। त्वं वृत्रमाशयानं सिरासु महो वज्रेण सिष्वपो व
॥ ११॥ त्वमिन्द्र नर्यो याँ अवो नॄन्तिष्ठा वातस्य सुयुजो वहिष्ठान्। यं ते
व्य उशना मन्दिनं दाद्वृत्रहणं पार्यं ततक्ष वज्रम्॥ १२॥ त्वं सूरो हरितो
यो नॄन्भरंश्चक्रमेतशो नायमिन्द्र। प्रास्य पारं नवतिं नाव्यानामपि कर्तमव
ऽयज्यून्॥ १३॥ त्वं नो अस्या इन्द्र दुर्हणायाः पाहि वज्रिवो दुरिताद्भ
प्र नो वाजान्रथ्यो३अश्वबुध्यानिषे यन्धि श्रवसे सूनृतायै॥ १४॥ मा सा ते
स्मत्सुमतिर्वि दसद्वाजप्रमहः समिषो वरन्त। आ नो भज मघवन्गोष्वर्यो मं
स्ते सधमादः स्याम॥ १५॥ २६॥ ८॥ १॥

॥ १२२॥ १-१५ कक्षीवानृषिः॥ विश्वेदेवा देवता॥ छन्दः-१,५,
भुरिक् पङ्क्तिः। ४ निचृत्पङ्क्तिः। ३,१५ स्वराट्पङ्क्तिः। ६ विराट्पाङ्क्ति २, ९,
१३ विराट् त्रिष्टुप्। ८, १२ निचृत् त्रिष्टुप् ७, ११ त्रिष्टुप्॥ स्वर
३-६, १४, १५ पञ्चमः। २, ७-१३ धैवतः॥

॥ १२२॥ प्र वः पान्तं रघुमन्यवोऽन्धो यज्ञं रुद्राय मीळ्हुषे भरध्वम्
वो अस्तोष्यसुरस्य वीरैरिषुध्येव मरुतो रोदस्योः॥ १॥ पत्नीव पूर्वहूतिं व
ध्या उषासानक्ता पुरुधा विदाने। स्तरीर्नात्कं व्युतं वसाना सूर्यस्य श्रिया सु
हिरण्यैः॥ २॥ ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान्। शि
तमिन्द्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः॥ ३॥ उत त्या मे य
श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै। प्र वो नपातमपां कृणुध्वं प्र मातरा र
नस्यायोः॥ ४॥ आ वो रुवण्युमौशिजो हुवध्यै घोषेव शंसमर्जुनस्य नंश
वः पूष्णे दावन आँ अच्छा वोचेय वसुतातिमग्नेः॥ ५॥ १॥ श्रुतं मे मित्र
णा हवेमोत श्रुतं सदने विश्वतः सीम्। श्रोतु नः श्रोतुरातिः सुश्रोतुः सुक्षेत्रा
न्धुरद्भिः॥ ६॥ स्तुषे सा वां वरुण मित्र रातिर्गवां शता पृक्षयामेषु पज्रे।

प्रियर॑थे दधा॑नाः स॒द्यः पु॒ष्टिं नि॑रुन्धा॒नासो॑ अग्मन् ॥ ७ ॥ अ॒स्य स्तु॑षे महि॑-
स्य॒ राध॒ः सचा॑ सनेम॒ नहु॑षः सु॒वीरा॑ः । जनो॒ यः प॒ज्रेभ्यो॑ वा॒जिनी॑वा॒नश्वा॑व-
र॒थिनो॒ मह्यं॑ सू॒रिः ॥ ८ ॥ जनो॒ यो मि॑त्रावरुणावभि॒ध्रुग॒पो न वां॑ सु॒नोत्य॑क्ष्ण-
ुक् । स्व॒यं स यक्ष्मं॒ हृद॑ये॒ नि ध॑त्त॒ आप॒ यदीं॒ होत्रा॑भिर्ऋ॒तावा॑ ॥ ९ ॥ स व्रा-
नहु॑षो॒ दंसु॑जूत॒ः शर्ध॑स्तरो न॒रां गू॒र्तश्र॑वाः । विसृ॑ष्टरातिर्याति बाळ्ह॒सृत्वा॒ वि-
सु पृ॒त्सु सद॒मिच्छूर॑ः ॥ १० ॥ २ ॥ अध॒ ग्मन्ता॒ नहु॑षो॒ हवं॑ सू॒रेः श्रोता॑ रा-
नो अ॒मृत॑स्य मन्द्राः । न॒भो॒जुवो॒ यन्नि॑र॒वस्य॒ राध॒ः प्रश॑स्तये महि॒ना रथ॑वते
११ ॥ ए॒तं शर्धं॑ धाम॒ यस्य॑ सू॒रेरित्य॑वोच॒न्दश॑तयस्य॒ नंशे॑ । द्यु॒म्नानि॒ येषु॑ व॒-
ाती रा॒रन्विश्वे॑ सन्वन्तु प्रभृ॒थेषु॒ वाजं॑ ॥ १२ ॥ मन्दा॑महे॒ दश॑तयस्य धा॒सेर्द्विर्य-
ञ्च॒ बिभ्र॑तो॒ यन्त्यन्ना॑ । किमि॒ष्टाश्व॑ इ॒ष्टर॑श्मिरे॒त ई॑शा॒नास॒स्तरु॑ष ऋञ्जते॒ नॄन्
१३ ॥ हिर॑ण्यकर्णं मणिग्रीव॒मर्ण॒स्तन्नो॒ विश्वे॑ वरिवस्यन्तु दे॒वाः । अ॒र्यो गिर॑ः
आ ज॒ग्मुषी॑रो॒स्राश्चा॑कन्तू॒भये॑ष्व॒स्मे ॥ १४ ॥ च॒त्वारो॑ मा मश॒र्शार॑स्य॒ शिश्व॒-
यो राज्ञ॒ आय॑वसस्य जि॒ष्णोः । रथो॑ वां मित्रावरुणा दी॒र्घाप्साः॒ स्यूम॑गभस्तिः॒
ो नाद्यौत् ॥ १५ ॥ ३ ॥

॥ १२३ ॥ १—१३ दीर्घतमसः पुत्रः कक्षीवानृषिः ॥ उषा देवता ॥
न्दः—१, ३, ६, ७, ९, १०, १३ विराट् त्रिष्टुप् । २, ४, ८, १२ निचृत्
ष्टुप् । ५ त्रिष्टुप् । ११ भुरिक् पङ्क्तिः ॥ स्वरः—१—४, ६–१०, १२, १३
तः । ५, ११ पञ्चमः ॥

॥ १२३ ॥ पृ॒थू रथो॒ दक्षि॑णाया अयो॒ज्यैनं॑ दे॒वासो॑ अ॒मृता॑सो अस्थुः । कृ॒-
ाद॒र्दस्थाद॒र्या॑ वि॒हाया॒श्चिकि॑त्सन्ती॒ मानु॑षाय॒ क्षया॑य ॥ १ ॥ पूर्वा॒ विश्व॑स्मा॒द्भुव॑-
दबोधि॒ जय॑न्ती॒ वाजं॑ बृह॒ती सनु॑त्री । उ॒च्चा व्य॑ख्यद्युव॒तिः पु॑न॒र्भूरोषा॑ अगन्प्र-
ा पू॒र्वहू॑तौ ॥ २ ॥ यद॒द्य भा॒गं वि॒भजा॑सि॒ नृभ्य॒ उषो॑ देवि मर्त्य॒त्रा सु॑जाते ।
ो नो॒ अत्र॑ सवि॒ता दमू॑ना॒ अना॑गसो वोचति॒ सूर्या॑य ॥ ३ ॥ गृ॒हङ्गृ॑हमह॒ना या॒-
च्छा॑ दि॒वेदि॑वे॒ अधि॒ नामा॒ दधा॑ना । सिषा॑सन्ती द्योत॒ना शश्व॒दागा॒दग्र॑मग्र॒मि-
जते॒ वसू॑नाम् ॥ ४ ॥ भग॑स्य॒ स्वसा॒ वरु॑णस्य जा॒मिरुष॑ः सूनृते प्रथ॒मा ज॑रस्व ।
धा स द॑घ्या॒ यो अ॒घस्य॑ धा॒ता जये॑म॒ तं दक्षि॑णया॒ रथे॑न ॥ ५ ॥ ४ ॥ उदी॑-
ां सू॒नृता॒ उत्पुर॑न्धी॒रुद॒ग्नय॑ः शुशुचा॒नासो॑ अस्थुः । स्पा॒र्हा वसू॑नि॒ तम॒साप॑गूळ्हा-
ष्कृण्वन्त्यु॒षसो॑ विभा॒तीः ॥ ६ ॥ अपा॒न्यदेत्य॒भ्य१॒॑न्यदे॑ति॒ विषु॑रूपे॒ अह॑नी॒ सं-

चरेते । परिक्षितोस्तमो अन्या गुहाकरद्यौदुषाः शोशुचता रथेन॥ ७ ॥ सदृश
सदृशीरिदु श्वो दीर्घं सचन्ते वरुणस्य धाम । अनवद्यास्त्रिंशतं योजनान्येकैका
परि यन्ति सद्यः ॥ ८ ॥ जानन्त्यह्नः प्रथमस्य नाम शुक्रा कृष्णादजनिष्ट
तीची । ऋतस्य योषा न मिनाति धामाहरहर्निष्कृतमाचरन्ती ॥ ९ ॥ कन्ये
न्वा शाशदानाँ एषि देवि देवमियक्षमाणम् । संस्मयमाना युवतिः पुरस्ता
वक्षांसि कृणुषे विभाती ॥ १० ॥ ५ ॥ सुसङ्काशा मातृमृष्टेव योषावि
कृणुषे दृशे कम् । भद्रा त्वमुषो वितरं व्युच्छ न तत्ते अन्या उषसो नशन्त ॥ १
अश्वावतीर्गोमतीर्विश्ववारा यतमाना रश्मिभिः सूर्यस्य । परा च यन्ति पुन
यन्ति भद्रा नाम वहमाना उषासः ॥ १२ ॥ ऋतस्य रश्मिमनुयच्छमाना
भद्रं क्रतुमस्मासु धेहि । उषो नो अद्य सुहवा व्युच्छास्मासु रायो मघवत्सु च
॥ १३ ॥ ९ ॥

॥ १२४ ॥ १—१३ कक्षीवान्दैर्घतमस ऋषिः ॥ उषा देवता ॥ छन्दः
३, ६, ९, १० निचृत् त्रिष्टुप् । ४, ७, ११ त्रिष्टुप् । १२ विराट्त्रिष्टुप् । २,
भुरिक् पङ्क्तिः । ५ पङ्क्तिः । ८ विराट् पङ्क्तिश्च ॥ स्वरः—१, ३, ६, ९—१
७ धैवतः । २, १३, ५, ८ पञ्चमः ॥

॥ १२४ ॥ उषा उच्छन्ती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिर
देवो नो अत्र सविता न्वर्थं प्रासावीद्द्विपत्प्र चतुष्पदित्यै ॥ १ ॥ अमिनती दै
व्रतानि प्रमिनती मनुष्या युगानि । ईयुषीणामुपमा शश्वतीनामायतीनां प्रथ
व्यद्यौत् ॥ २ ॥ एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्त
ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥ ३ ॥ उपो अदर्शि
शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि । अद्मसन्न ससतो बोधयन्ती शश
मागात्पुनरेयुषीणाम् ॥ ४ ॥ पूर्वे अर्धे रजसो अप्त्यस्य गवां जनित्र्यकृ
केतुम् । व्यु प्रथते वितरं वरीय ओभा पृणन्ती पित्रोरुपस्था ॥ ५ ॥ ७ ॥ ए
पुरुतमा दृशे कं नाजामिं न परि वृणक्ति जामिम् । अरेपसा तन्वा शाश
नार्भादीषते न महो विभाती ॥ ६ ॥ अभ्रातेव पुंस एति प्रतीची गर्तारुगि
नये धनानाम् । जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः
स्वसा स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः प्रतिचक्ष्येव । व्युच्छन्ती रश्मिभि
सूर्यस्याञ्ज्यङ्क्ते समनगा इव व्राः ॥ ८ ॥ आसां पूर्वासामहसु स्वसॄणामपरा

ाति प॒श्चात् । ताः प्र॑त्न॒वन्नव्य॑सीर्नू॒नम॒स्मे रे॒वदु॑च्छन्तु सु॒दिना॑ उ॒षास॑: ॥९॥
ोधयोषः पृ॒ण॒तो म॑घो॒न्यबु॑ध्यमानाः प॒णय॑: ससन्तु । रे॒वदु॑च्छ म॒घव॑द्भ्यो म-
ने रे॒वत्स्तो॒त्रे सू॑नृते जा॒रय॑न्ती ॥ १० ॥ ८ ॥ अवे॒यम॑श्वैद्युव॒तिः पु॒रस्ता॑द्युङ्क्ते
मरु॒णाना॒मनी॑कम् । वि नू॒नमु॑च्छा॒दस॑ति॒ प्र के॒तुर्गृ॒हंगृ॑हमुप॑ तिष्ठाते अ॒ग्निः ॥११॥
वयं॑श्चिद्व॒स॒तेर॑पप्त॒न्नर॑श्च ये पि॑तु॒भाजो॒ व्यु॑ष्टौ । अमा स॒ते व॑हसि॒ भूरि॑ वा-
र्शं देवि दा॒शुषे॒ मर्त्या॑य ॥ १२ ॥ अस्तो॑ढ्वं स्तोम्या॒ ब्रह्म॑णा मेऽवी॑वृधध्वमुश-
ुषासः । यु॒ष्माकं॑ देवी॒रव॑सा सनेम सह॒स्रिणं॑ च श॒तिनं॑ च॒ वाज॑म् ॥ १३॥९ ॥

॥ १२५ ॥ १–७ कक्षीवान्दैर्घतमस ऋषिः ॥ दम्पती देवते ॥ छन्दः–१, ३,७
ुप् । २, ६ निचृत् त्रिष्टुप् । ४,५ जगती ॥ स्वरः–१–३, ६, ७ धैवतः । ४,
निषादः ॥

॥ १२५ ॥ प्रा॒ता रत्नं॑ प्रात॒रित्वा॑ दधाति॒ तं चि॑कि॒त्वान्प्र॑ति॒गृह्या नि ध॑त्ते ।
प्र॒जां व॒र्धय॑मान॒ आयू॑ रा॒यस्पोषे॑ण सचते सु॒वीर॑: ॥ १ ॥ सु॒गुर॑सत्सुहि॒र॒ण्यः
श्वो॑ बृ॒हद॑स्मै॒ वय॒ इन्द्रो॑ दधाति । यस्त्वा॒यन्तं॒ वसु॑ना प्रातरित्वो मु॒क्षीज॑येव॒ प-
ुत्सि॒नाति॑ ॥ २ ॥ आय॑म॒द्य सु॒कृतं॑ प्रा॒तरि॒च्छन्नि॒ष्टेः पु॒त्रं वसु॑मता॒ रथे॑न । अं॒शोः
पा॑यय मत्स॒रस्य॑ क्ष॒यद्वी॑रं वर्धय सू॒नृता॑भिः ॥ ३ ॥ उप॑ क्षरन्ति॒ सिन्ध॑वो
ाभुवं॑ ई॒जा॒नं च॑ य॒क्ष्यमा॑णं च धे॒नव॑: । पृ॒णन्तं॑ च॒ पपु॑रिं च श्रव॒स्यवो॑ घृ॒तस्य॒
ा उप॑ यन्ति वि॒श्वत॑: ॥ ४ ॥ नाक॑स्य पृ॒ष्ठे अधि॑ तिष्ठति श्रि॒तो यः पृ॒णाति॒
ह दे॒वेषु॑ गच्छति । तस्मा॒ आपो॑ घृ॒तम॑र्षन्ति॒ सिन्ध॑व॒स्तस्मा॑ इ॒यं दक्षि॑णा पिन्व-
सदा॑ ॥ ५ ॥ दक्षि॑णावता॒मिदि॒मानि॑ चि॒त्रा दक्षि॑णावतां दि॒वि सूर्या॑सः । द-
णावन्तो अ॒मृतं॑ भजन्ते॒ दक्षि॑णावन्त॒: प्र ति॑रन्त॒ आयु॑: ॥ ६ ॥ मा पृ॒णन्तो॒ दु-
मेन॒ आर॒न्मा जा॑रिषुः सू॒रय॑: सुव्र॒तास॑: । अ॒न्यस्तेषां॑ परि॒धिर॑स्तु॒ कश्चि॒दपृ॑-
तम॒भि सं य॑न्तु॒ शोका॑: ॥ ७ ॥ १० ॥

॥१२६॥ १–५ कक्षीवान् । ६ भावयव्यः । ७ रोमशा ब्रह्मवादिनीचर्षिः ॥
ांसो देवता ॥ छन्दः–१, २, ४, ५ निचृत्त्रिष्टुप् । ३ त्रिष्टुप् । ६, ७ अनुष्टुप् ॥
ः–१, ३, ४, ५ धैवतः । ६, ७ गान्धारः ॥

॥ १२६ ॥ अम॑न्दा॒न्स्तोमा॒न्प्र भ॑रे मनी॒षा सिन्धा॒वधि॑ क्षिय॒तो भा॒व्यस्य॑ ।
मे॑ स॒हस्र॒मर्मि॑मीत स॒वान॒तूर्तो॒ राजा॒ श्रव॑ इ॒च्छमा॑नः ॥ १ ॥ श॒तं रा॒ज्ञो नाध॑-

मानस्य निष्कान्छतमश्वान्प्रयतान्सद्य आदम् । शतं कक्षीवाँ असुरस्य गोनां
वि श्रवोऽजरमा ततान ॥ २ ॥ उप मा श्यावाः स्वनयेन दत्ता वधूमन्तो दश
थासो अस्थुः । षष्टिः सहस्रमनु गव्यमागात्सनत्कक्षीवाँ अभिपित्वे अह्नाम् ॥
चत्वारिंशद्दशरथस्य शोणाः सहस्रस्याग्रे श्रेणिं नयन्ति । मदच्युतः कृशना
अत्यान्कक्षीवन्त उदमृक्षन्त पज्राः ॥ ४ ॥ पूर्वामनु प्रयतिमाददे वस्त्रीन्युक्ताँ
ष्टावरिधायसो गाः । सुबन्धवो ये विश्या इव व्रा अनस्वन्तः श्रव ऐषन्त पज्राः ।
आगधिता परिगधिता या कशीकेव जङ्गहे । ददाति मह्यं यादुरी याशूनां
ज्या शता ॥ ६ ॥ उपोप मे परा मृश मा मे दभ्राणि मन्यथाः । सर्वाहम
रोमशा गन्धारीणामिवाविका ॥ ७ ॥ ११ ॥ १८ ॥

॥ १२७ ॥ १–११ परुच्छेप ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, २, ३
६ अष्टिः । ४, ७, ११ भुरिगष्टिः । ५, ६ अत्यष्टिः । १० भुरिगति शक्वरी ॥ स्व
१–४, ७–६, ११ मध्यमः । ५, ६ गान्धारः । १० पञ्चमः ॥

॥ १२७ ॥ अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जा
दसम् । य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा । घृतस्य विभ्राष्टिमनु वष्टि शोचिष
ह्वानस्य सर्पिषः ॥ १ ॥ यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां विप्र मन्मभिर्वि प्रे
शुक्र मन्मभिः । परिज्मानमिव द्यां होतारं चर्षणीनाम् । शोचिष्केशं वृषणं यमि
विशः प्रावन्तु जूतये विशः ॥ २ ॥ स हि पुरू चिदोजसा विरुक्मता दीद्यानो
वति द्रुहन्तरः परशुर्न द्रुहन्तरः । वीळु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरं ।
षहमाणो यमते नायते धन्वासहा नायते ॥ ३ ॥ दृळ्हा चिदस्मा अनु दुर्यथा
तेजिष्ठाभिररणिभिर्दाष्ट्यवसेऽग्नये दाष्ट्यवसे । प्र यः पुरूणि गाहते तक्षद्वनेव
चिषा । स्थिरा चिदन्ना नि रिणात्योजसा नि स्थिराणि चिदोजसा ॥ ४ ॥ तमस्य पृ
परासु धीमहि नक्तं यः सुदर्शतरो दिवातरादप्रायुषे दिवातरात् । आदस्यायु
णवद्वीळु शर्म न सूनवे । भक्तमभक्तमवो व्यन्तो अजरा अग्नयो व्यन्तो अजराः ॥
१२ ॥ स हि शर्धो न मारुतं तुविष्वणिरप्नस्वतीषूर्वरास्विष्टनिरार्तनास्विष्टनिः । अ
द्व्यान्याददिर्यज्ञस्य केतुरर्हणा । अध स्मास्य हर्षतो हृषीवतो विश्वे जुषन्त पन्था
शुभे न पन्थाम् ॥ ६ ॥ द्विता यदीं कीस्तासो अभिद्यवो नमस्यन्त उपवोचन्त भृगवो
थ्नन्तो दाशा भृगवः । अग्निरीशे वसूनां शुचिर्यो धर्णिरेषाम् । प्रियाँ अपिधी
निषीष्ट मेधिर आ वनिषीष्ट मेधिरः ॥ ७ ॥ विश्वासां त्वा विशां पतिं हव

सां समानं दम्पतिं भुजे सत्यगिर्वाहसं भुजे । अतिथिं मानुषाणां पितुर्न यस्यासया ।
ो च विश्वे अमृतास आ वयो हव्या देवेष्वा वयः ॥८॥ त्वमग्ने सहसा सह न्तमः शु-
न्तमो जायसे देवतातये रयिर्न देवतातये । शुष्मिन्तमो हि ते मदो द्युम्निन्तम
क्रतुः । अध स्मा ते परि चरन्त्यजर श्रुष्टीवानो नाजर ॥९॥ प्र वो महे सहसा
स्वत उषर्बुधे पशुषे नाग्नये स्तोमो बभूत्वग्नये । प्रति यदीं हविष्मान्विश्वासु क्षासु
वि । अग्रे रेभो न जरत ऋषूणां जूर्णि होत ऋषूणाम् ॥१०॥ स नो नेदिष्ठं ददृ-
न आ भराग्ने देवेभिः सचनाः सुचेतुना महो रायः सुचेतुना । महि शविष्ठ नस्कृधि
ञ्चे भुजे अस्यै । महिस्तोतृभ्यो मघवन्त्सुवीर्यं मथीरुग्रो न शवसा ॥११॥१३॥

॥ १२८ ॥ १–८ परुच्छेप ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१ निचृदत्यष्टिः ।
४, ६, ८ विराडत्यष्टिः । २ भुरिगष्टिः । ५, ७ निचृदष्टिः ॥ स्वरः–१, ३,
६, ८ गान्धारः । २, ५, ७ मध्यमः ॥

॥१२८॥ अयं जायत मनुषो धरीमणि होता यजिष्ठ उशिजामनु व्रतमग्निः स्वमनु
म् । विश्वश्रुष्टिः सखीयते रयिरिव श्रवस्यते । अदब्धो होता नि षददिळस्पदे
वीत इळस्पदे ॥१॥ तं यज्ञसाधमपि वातयामस्यृतस्य पथा नमसा हविष्मता दे-
ता हविष्मता । स न ऊर्जामुपाभृत्यया कृपा न जूर्यति । यं मातरिश्वा मनवे
वतो देवं भाः परावतः ॥ २ ॥ एवेन सद्यः पर्येति पार्थिवं मुहुर्गी रेतो वृषभः
नैक्रदद्धद्रेतः कनिक्रदत् । शतं चक्षाणो अक्षभिर्देवो वनेषु तुर्वणिः । सदो दधान
रेषु सानुष्वग्निः परेषु सानुषु ॥३॥ स सुक्रतुः पुरोहितो दमेदमेऽग्निर्यज्ञस्याध्वरस्य
ति क्रत्वा यज्ञस्य चेतति । क्रत्वा वेधा इषूयते विश्वा जातानि पस्पशे । यतो घृतश्री-
थिरजायत वह्निर्वेधा अजायत ॥४॥ क्रत्वा यदस्य तविषीषु पृञ्चतेऽग्नेरवेण मरुतां
भोज्येषिराय न भोज्या । स हि ष्मा दानमिन्वति वसूनां च मज्मना । स
त्रासते दुरितादभिह्रुतः शंसादघादभिह्रुतः ॥ ५ ॥ १४ ॥ विश्वो विहाया अ-
र्वसुर्दधे हस्ते दक्षिणे तरणिर्न शिश्रथच्छ्रवस्यया न शिश्रथत् । विश्वस्मा इदि-
यते देवत्रा हव्यमोहिषे । विश्वस्मा इत्सुकृते वारमृण्वत्यग्निर्द्वारा व्यृण्वति
६ ॥ स मानुषे वृजने शन्तमो हितोऽग्निर्यज्ञेषु जेन्यो न विश्पतिः प्रियो यज्ञेषु
पतिः । स हव्या मानुषाणामिळा कृतानि पत्यते । स नस्त्रासते वरुणस्य धू-
हो देवस्य धूर्तेः ॥ ७ ॥ अग्निं होतारमीळते वसुधितिं प्रियं चेतिष्ठमरतिं न्ये-
हव्यवाहं न्येरिरे । विश्वायुं विश्ववेदसं होतारं यजतं कविम् । देवासो रण्व-
से वसूयवो गीर्भी रण्वं वसूयवः ॥ ८ ॥ १५ ॥

॥ १२९ ॥ १–११ परुच्छेप ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, २
चृदत्यष्टिः । ३, विराडत्यष्टिः । ४ अष्टिः । ६, ११ भुरिगष्टिः । १० निचृदष्टि
५ भुरिगतिशक्वरी । ७ स्वराडतिशक्वरी । ८, ९ स्वराट् शक्वरी ॥ स्वरः–१-
गान्धारः । ४, ६, १०, ११ मध्यमः । ५, ७ पञ्चमः । ८, ९ धैवतः ॥

॥ १२९ ॥ यं त्वं रथमिन्द्र मेधसातयेऽपाका सन्तमिषिर प्रणयसि प्रान
नयसि । सद्यश्चित्तमभिष्टये करो वशश्च वाजिनम् । सास्माकमनवद्य तूतुजान
धसामिमां वाचं न वेधसाम् ॥ १ ॥ स श्रुधि यः स्मा पृतनासु कासु चिद्
य्यं इन्द्र भरहूतये नृभिरसि प्रतूर्तये नृभिः । यः शूरैः स्वः सनिता यो
वाजं तरुता । तमीशानास इरधन्त वाजिनं पृक्षमत्यं न वाजिनम् ॥ २ ॥ द
हि ष्मा वृषणं पिन्वसि त्वचं कं चिद्यावीररुं शूर मर्त्यं परिवृणक्षि मर्त्य
इन्द्रोत तुभ्यं तद्दिवे तद्रुद्राय स्वयशसे । मित्राय वोचं वरुणाय सप्रथः सुमृ
काय सप्रथः ॥ ३ ॥ अस्माकं व इन्द्रमुश्मसीष्टये सखायं विश्वायुं प्रासहं
वाजेषु प्रासहं युजम् । अस्माकं ब्रह्मोतयेऽवा पृत्सुषु कासु चित् । नहि त्वा श
स्तरते स्तृणोषि यं विश्वं शत्रुं स्तृणोषि यम् ॥ ४ ॥ नि षू नमातिमतिं कय
चित्तेजिष्ठाभिररणिभिर्नोतिभिरुग्राभिरुग्रोतिभिः । नेषि णो यथा पुरानेनाः
मन्यसे । विश्वानि पूरोरप पर्षि वह्निरासा वह्निर्नो अच्छ ॥ ५ ॥ १८ ॥ प्र त
चेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति । स्वयं
अस्मदा निदो वधैरजेत दुर्मतिम् । अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्र
॥ ६ ॥ वनेम तद्धोत्रया चितन्त्या वनेम रयिं रयिवः सुवीर्यं रण्वं सन्तं सु
र्यम् । दुर्मन्मानं सुमन्तुभिरेमिषा पृचीमहि । आ सत्याभिरिन्द्रं द्युम्नहूतिभिर्य
द्युम्नहूतिभिः ॥ ७ ॥ प्रप्रा वो अस्मे स्वयशोभिरूती परिवर्ग इन्द्रो दुर्मतीनां
रीमन्दुर्मतीनाम् । स्वयं सा रिषयध्यै या न उपेषे अत्रैः । हतेमसन्न वक्षति चि
जूर्णिर्न वक्षति ॥ ८ ॥ त्वं न इन्द्र राया परीणसा याहि पथाँ अनेहसा
याह्यरक्षसा । सचस्व नः पराक आ सचस्वास्तमीक आ । पाहि नो दूरादाराद
ष्टिभिः सदा पाह्यभिष्टिभिः ॥ ९ ॥ त्वं न इन्द्र राया तरूषसोग्रं चित्त्वा मह
सक्षदवसे महे मित्रं नावसे । ओजिष्ठ त्रातरविता रथं कं चिदमर्त्य । अन्यम
द्रिरिषेः कं चिदद्रिवो रिरिक्षन्तं चिदद्रिवः ॥ १० ॥ पाहि न इन्द्र सुष्टुत स्रि
ऽवयाता सदमिद्दुर्मतीनां देवः सन्दुर्मतीनाम् । हन्ता पापस्य रक्षसस्त्राता विप्र
मावतः । अधा हि त्वा जनिता जीजनद्वसो रक्षोहणं त्वा जीजनद्वसो ॥ ११ ॥ १

॥ १३० ॥ १–१० परुच्छेप ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, ५ भु-
ष्टिः । २, ३, ६, ९ स्वराडष्टिः । ४, ८ अष्टिः । ७ निचृदत्यष्टिः । १०
ाट् त्रिष्टुप् ॥ स्वरः–१–६, ८, ९ मध्यमः । ७ गान्धारः । १० धैवतः ॥

॥ १३० ॥ एन्द्र याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्तं रा-
सत्पतिः । हवामहे त्वा वयं प्रयस्वन्तः सुते सचा । पुत्रासो न पितरं वाज-
तये मंहिष्ठं वाजसातये ॥ १ ॥ पिबा सोममिन्द्र सुवानमद्रिभिः कोशेन सिक्त-
तं न वंसगस्तातृषाणो न वंसगः । मदाय हर्यताय ते तुविष्टमाय धायसे । आ
यच्छन्तु हरितो न सूर्यमहा विश्वेव सूर्यम् ॥ २ ॥ अविन्दद्दिवो निहितं गुहा
धिं वेर्न गर्भं परिवीतमश्मन्यनन्ते अन्तरश्मनि । व्रजं वज्री गवामिव सिषास-
ङ्गिरस्तमः । अपावृणोदिष इन्द्रः परीवृता द्वार इषः परीवृताः ॥ ३ ॥ दादृहा-
वज्रमिन्द्रो गभस्त्योः क्षद्मेव तिग्ममसनाय सं श्यदहिहत्याय सं श्यत् । सं-
व्यान ओजसा शवोभिरिन्द्र मज्मना । तष्टेव वृक्षं वनिनो नि वृश्चसि परश्वेव
वृश्चसि ॥ ४ ॥ त्वं वृथा नद्य इन्द्र सर्तवेऽच्छा समुद्रमसृजो रथाँ इव वाज-
ो रथाँ इव । इत ऊतीरयुञ्जत समानमर्थमक्षितम् । धेनूरिव मनवे विश्वदोह-
जनाय विश्वदोहसः ॥ ५ ॥ १८ ॥ इमां ते वाचं वसूयन्त आयवो रथं न
रः स्वपा अतक्षिषुः सुम्नाय त्वामतक्षिषुः । शुम्भन्तो जेन्यं यथा वाजेषु विप्र
जिनं । अत्यमिव शवसे सातये धना विश्वा धनानि सातये ॥ ६ ॥ भिनत्पुरो
तिमिन्द्र पूरवे दिवोदासाय महि दाशुषे नृतो वज्रेण दाशुषे नृतो । अतिथि-
ाय शम्बरं गिरेरुग्रो अवाभरत् । महो धनानि दयमान ओजसा विश्वा धना-
ोजसा ॥७॥ इन्द्रः समत्सु यजमानमार्यं प्रावद्विश्वेषु शतमूतिराजिषु स्वर्मीळ्हे-
ाजिषु । मनवे शासदव्रतान्त्वचं कृष्णामरन्धयत् । दक्षन्न विश्वं ततृषाणमोषति
र्शसानमोषति ॥ ८ ॥ सूरश्चक्रं प्र वृहज्जात ओजसा प्रपित्वे वाचमरुणो मुषा-
ीशान आ मुषायति । उशना यत्परावतोऽजगन्नूतये कवे । सुम्नानि विश्वा
ुषेव तुर्वणिरहा विश्वेव तुर्वणिः ॥ ९ ॥ स नो नव्येभिर्वृषकर्मन्नुक्थैः पुरां दर्तः
युभिः पाहि शग्मैः । दिवोदासेभिरिन्द्र स्तवानो वावृधीथा अहोभिरिव द्यौः
१० ॥ १९ ॥

॥ १३१ ॥ १–७ परुच्छेप ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, २ निचृदत्य-
ः । ४ विराडत्यष्टिः । ३, ५, ६, ७ भुरिगष्टिः ॥ स्वरः–१, २, ४, गान्धारः ।
५–७ मध्यमः ॥

॥ १३१ ॥ इन्द्राय हि द्यौरसुरो अनम्नतेन्द्राय मही पृथिवी वरीमभिर्द्युम्
साता वरीमभिः । इन्द्रं विश्वे सजोषसो देवासो दधिरे पुरः । इन्द्राय विश्
सवनानि मानुषा रातानि सन्तु मानुषा ॥ १ ॥ विश्वेषु हि त्वा सवनेषु तुञ्ज
समानमेकं वृषमण्यवः पृथक् स्वः सनिष्यवः पृथक् । तं त्वा नावं न पर्षणिं
षस्य धुरि धीमहि । इन्द्रं न यज्ञैश्चितयन्त आयवः स्तोमेभिरिन्द्रमायवः ॥ २
वि त्वा ततस्रे मिथुना अवस्यवो व्रजस्य साता गव्यस्य निःसृजः सक्षन्त
निःसृजः । यद्गव्यन्ता द्वा जना स्व१र्यन्ता समूहसि । आविष्करिक्रद्वृषणं स
भुवं वज्रमिन्द्र सचाभुवम् ॥ ३ ॥ विदुष्टे अस्य वीर्यस्य पूरवः पुरो यदिन्द्र श
दीरवातिरः सासहानो अवातिरः । शासस्तमिन्द्र मर्त्यमयज्युं शवसस्पते । महीम
ष्णाः पृथिवीमिमा अपो मन्दसान इमा अपः ॥ ४ ॥ आदित्ते अस्य वीर्य
चर्किरन्मदेषु वृषन्नुशिजो यदाविथ सखीयतो यदाविथ । चकर्थ कारमेभ्यः
नासु प्रवन्तवे । ते अन्यामन्यां नद्यं सनिष्णत श्रवस्यन्तः सनिष्णत ॥ ५ ॥
नो अस्या उषसो जुषेत ह्य१र्कस्य बोधि हविषो हवीमभिः स्वर्षाता हवीमभि
यदिन्द्र हन्तवे मृधो वृषा वज्रिञ्चिकेतसि । आ मे अस्य वेधसो नवीयसो मन्म श्रु
नवीयसः ॥ ६ ॥ त्वं तमिन्द्र वावृधानो अस्मयुरमित्रयन्तं तुविजात मर्त्यं वज्रे
शूर मर्त्यम् । जहि यो नो अघायति शृणुष्व सुश्रवस्तमः । रिष्टं न यामन्नप
दुर्मतिर्विश्वाप भूतु दुर्मतिः ॥ ७ ॥ २० ॥

॥ १३२ ॥ १—६ परुच्छेप ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१,
५, ६ विराडत्यष्टिः । २ भुरिगतिशक्वरी । ४ निचृदष्टिः ॥ स्वरः—१, ३,
६ गान्धारः । २ पञ्चमः । ४ मध्यमः ॥

॥ १३२ ॥ त्वया वयं मघवन्पूर्व्ये धन इन्द्रत्वोताः सासह्याम पृतन्यतो
नुयाम वनुष्यतः । नेदिष्ठे अस्मिन्नहन्यधि वोचा नु सुन्वते । अस्मिन्यज्ञे वि
येमा भरे कृतं वाजयन्तो भरे कृतम् ॥ १ ॥ स्वर्जेषे भर आप्रस्य वक्मन्युषर्बुधः
स्मिन्नञ्जसि क्राणस्य स्वस्मिन्नञ्जसि । अहन्निन्द्रो यथा विदे शीर्ष्णाशीर्ष्णा
प्रवाच्यः । अस्मत्रा ते सध्र्यक्सन्तु रातयो भद्रा भद्रस्य रातयः ॥ २ ॥
प्रयः प्रत्नथा ते शुशुक्वनं यस्मिन्यज्ञे वारमकृण्वत क्षयमृतस्य वारसि क्षयम् ।
तद्वोचेरध छितान्तः पश्यन्ति रश्मिभिः । स घा विदे अन्विन्द्रो गवेषणो ब
त्तिद्भ्यो गवेषणः ॥ ३ ॥ नू इत्था ते पूर्वथा च प्रवाच्यं यदङ्गिरोभ्योऽवृण

मिन्द्र शिक्षन्नप व्रजम् । ऐभ्यः समान्या दिशा स्मभ्यं जेषि योत्सि च । सु-
न्यों रन्धया कं चिदव्रतं हृणायन्तं चिदव्रतम् ॥ ४ ॥ सं यज्जनान् क्रतुभिः शूरं
युद्धने हिते तरुषन्त श्रवस्यवः प्र यक्षन्त श्रवस्यवः । तस्मा आयुः प्रजावदिद्बाधे
न्त्योजसा । इन्द्र ओक्यं दिधिषन्त धीतयो देवाँ अच्छा न धीतयः ॥ ५ ॥
तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तन्तमिद्धतं वज्रेण तन्तमिद्धतम् ।
चत्ताय छन्त्सद्गहनं यदिनक्षत् । अस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट
वतः ॥ ६ ॥ २१ ॥

॥ १३३ ॥ १—७ परुच्छेप ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१ त्रिष्टुप् ।
३ निचृदनुष्टुप् । ४ स्वराडनुष्टुप् । ५ आर्षी गायत्री । ६ स्वराड् ब्राह्मीजगती ।
विराडष्टिः ॥ स्वरः—१ धैवतः । २—५ गान्धारः । ६ निषादः । ७ मध्यमः ॥

॥ १३३ ॥ उभे पुनामि रोदसी ऋतेन द्रुहो दहामि सं महीरनिन्द्राः । अ-
भ्य यत्र हता अमित्रा वैलस्थानं परि तृळ्हा अशेरन् ॥ १ ॥ अभिव्लग्या चि-
वः शीर्षा यातुमतीनाम् । छिन्धि वटूरिणा पदा महावटूरिणा पदा ॥ २ ॥
सां मघवञ्जहि शर्धो यातुमतीनाम् । वैलस्थानके अर्मके महावैलस्थे अर्मके
३ ॥ यासां तिस्रः पञ्चाशतोऽभिव्लङ्गैरपावपः । तत्सु ते मनायति तकत्सु ते
यति ॥ ४ ॥ पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण । सर्वं रक्षो नि बर्हय
५ ॥ अवर्मह इन्द्र दादृहि श्रुधी नः शुशोच हि द्यौः क्षा न भीषाँ अद्रिवो घृ-
न्न भीषाँ अद्रिवः । शुष्मिन्तमो हि शुष्मिभिर्वधैरुग्रेभिरीयसे । अपूरुषघ्नो अप्र-
। शूर सत्वभिस्त्रिसप्तैः शूर सत्वभिः ॥ ६ ॥ वनोति हि सुन्वन्क्षयं परीणसः
न्वानो हि ष्मा यजत्यव द्विषो देवानामव द्विषः । सुन्वान इत्सिषासति सहस्रा
त्यवृतः । सुन्वानायेन्द्रो ददात्याभुवं रयिं ददात्याभुवम् ॥ ७ ॥ २२ ॥ १६ ॥

॥ १३४ ॥ १—६ परुच्छेप ऋषिः ॥ वायु देवता ॥ छन्दः—१, ३ नि-
त्यष्टिः ॥ २, ४ विराडत्यष्टिः । ५ अष्टिः । ६ विराडष्टिः ॥ स्वरः—१—४
न्धारः । ५, ६ मध्यमः ॥

॥ १३४ ॥ आ त्वा जुवो रारहाणा अभि प्रयो वायो वहन्त्विह पूर्वपीतये
मस्य पूर्वपीतये । ऊर्ध्वा ते अनु सूनृता मनस्तिष्ठतु जानती । नियुत्वता रथेना
हि दावने वायो मखस्य दावने ॥ १ ॥ मन्दन्तु त्वा मन्दिनो वायविन्दवोऽ-

स्मत्क्राणासः सुकृता अभिद्यवो गोभिः क्राणा अभिद्यवः । यद्ध क्राणा इ
दत्तं सचन्त ऊतयः । सध्रीचीना नियुतो दावने धिय उप ब्रुवत ईं धियः ॥ २
वायुर्युङ्क्ते रोहिता वायुररुणा वायू रथे अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे
बोधया पुरंधिं जार आ ससतीमिव । प्र चक्षय रोदसी वासयोषसः श्रवसे
सयोषसः ॥ ३ ॥ तुभ्यमुषासः शुचयः परावति भद्रा वस्त्रा तन्वते दंसु रश्मि
चित्रा नव्येषु रश्मिषु । तुभ्यं धेनुः सबर्दुघा विश्वा वसूनि दोहते । अजनयो मरु
वक्षणाभ्यो दिव आ वक्षणाभ्यः ॥ ४ ॥ तुभ्यं शुक्रासः शुचयस्तुरण्यवो मदेषु
ईषणन्त भुर्वण्यपामिषन्त भुर्वणि । त्वां त्सारी दसमानो भगमीट्टे तक्ववीये ।
विश्वस्माद्भुवनात्पासि धर्मणासुर्यात्पासि धर्मणा ॥ ५ ॥ त्वं नो वायवेषामपूर्व्यः
सोमानां प्रथमः पीतिमर्हसि सुतानां पीतिमर्हसि । उतो विहुत्मतीनां विशां व
र्षीणाम् । विश्वा इत्ते धेनवो दुह्र आशिरं घृतं दुह्रत आशिरम् ॥ ६ ॥ २३ ॥

॥ १३५ ॥ १-६ परुच्छेप ऋषिः ॥ वायुर्देवता ॥ छन्दः—१, ३ निचृदत्यष्टिः ।
२, ४ विराडत्यष्टिः । ५, ६ भुरिगष्टिः । ६, ८ निचृदष्टिः । ७ अष्टिः ॥ स्वरः
१–४ गान्धारः । ५–६ मध्यमः ॥

॥ १३५ ॥ स्तीर्णं बर्हिरुप नो याहि वीतये सहस्रेण नियुता नियुत्वते
तिनीभिर्नियुत्वते । तुभ्यं हि पूर्वपीतये देवा देवाय येमिरे । प्र ते सुतासो मधु
न्तो अस्थिरन्मदाय क्रत्वे अस्थिरन् ॥ १ ॥ तुभ्यायं सोमः परिपूतो अद्रि
स्पार्हा वसानः परि कोशमर्षति शुक्रा वसानो अर्षति । तवायं भाग आयुषु
मो देवेषु हूयते । वह वायो नियुतो याह्यस्मयुर्जुषाणो याह्यस्मयुः ॥ २ ॥ आ
नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि वीतये वायो हव्यानि वीतये
तवायं भाग ऋत्वियः सरश्मिः सूर्ये सचा । अध्वर्युभिर्भरमाणा अयंसत वा
शुक्रा अयंसत ॥ ३ ॥ आ वां रथो नियुत्वान्वक्षदवसेऽभि प्रयांसि सुधिता
वीतये वायो हव्यानि वीतये । पिबतं मध्वो अन्धसः पूर्वपेयं हि वां हितम् । व
यवा चन्द्रेण राधसा गतमिन्द्रश्च राधसा गतम् ॥ ४ ॥ आ वां धियो ववृत्यु
ध्वराँ उपेममिन्दुं मर्मृजन्त वाजिनमाशुमत्यं न वाजिनम् । तेषां पिबतमस्मयू आ
नो गन्तमिहोत्या । इन्द्रवायू सुतानामद्रिभिर्युवं मदाय वाजदा युवम् ॥ ५ ॥ २४
इमे वां सोमा अप्स्वा सुता इहाध्वर्युभिर्भरमाणा अयंसत वायो शुक्रा अयंसत
एते वामभ्यसृक्षत तिरः पवित्रमाशवः । युवायवोऽति रोमाण्यव्यया सोमा

यव्यया ॥ ६ ॥ अति वायो ससतो याहि शश्वतो यत्र ग्रावा वदति तत्र ग-
तं गृहमिन्द्रश्च गच्छतम् । वि सूनृता ददृशे रीयते घृतमा पूर्णया नियुता याथो
ध्वरमिन्द्रश्च याथो अध्वरम् ॥ ७ ॥ अत्राह तद्वहेथे मध्व आहुतिं यमश्वत्थमुप-
ष्ठन्त जायवोऽस्मे ते सन्तु जायवः । साकं गावः सुवते पच्यते यवो न ते वा-
उप दस्यन्ति धेनवो नाप दस्यन्ति धेनवः ॥ ८ ॥ इमे ये ते सु वायो बाह्वोज-
ऽन्तर्नदी ते पतयन्त्युक्षणो महि व्राधन्त उक्षणः । धन्वञ्चिद्ये अनाशवो जीरा-
दगिरौकसः । सूर्यस्येव रश्मयो दुर्नियन्तवो हस्तयोर्दुर्नियन्तवः ॥ ९ ॥ २५ ॥

॥ १३६ ॥ १–७ परुच्छेप ऋषिः ॥ १–५ मित्रावरुणौ । ६–७ मन्त्रोक्ता
ता ॥ छन्दः–१, ३, ५, ६ स्वराडत्यष्टिः । २ निचृदष्टि । ४ भुरिगष्टिः । ७
ष्टुप् ॥ स्वरः–१, ३, ५, ६ गान्धारः । २, ४ मध्यमः । ७ धैवतः ॥

॥ १३६ ॥ प्र सु ज्येष्ठं निचिराभ्यां बृहन्नमो हव्यं मतिं भरता मृळयद्भ्यां
ादिष्ठं मृळयद्भ्याम् । ता सम्राजा घृतासुती यज्ञेयज्ञ उपस्तुता । अथैनोः क्षत्रं न
तश्चनाधृषे देवत्वं नू चिदाधृषे ॥ १ ॥ अदर्शि गातुरुरवे वरीयसी पन्था ऋत-
 समयंस्त रश्मिभिश्चक्षुर्भगस्य रश्मिभिः । द्युक्षं मित्रस्य सादनमर्यम्णो वरुणस्य
। अथा दधाते बृहदुक्थ्यं वय उपस्तुत्यं बृहद्वयः ॥ २ ॥ ज्योतिष्मतीमदितिं
रयत्क्षितिं स्वर्वतीमा सचेते दिवेदिवे जागृवांसा दिवेदिवे । ज्योतिष्मत्क्षत्रमा-
ते आदित्या दानुनस्पती । मित्रस्तयोर्वरुणो यातयज्जनोऽर्यमा यातयज्जनः
३ ॥ अयं मित्राय वरुणाय शन्तमः सोमो भूत्ववपानेष्वाभगो देवो देवेष्वाभ-
। तं देवासो जुषेरत विश्वे अद्य सजोषसः । तथा राजाना करथो यदीमह
तावाना यदीमहे ॥ ४ ॥ यो मित्राय वरुणायाविधज्जनोऽनर्वाणं तं परि पा-
 अंहसो दाश्वांसं मर्तमंहसः । तमर्यमाभि रक्षत्यृजूयन्तमनु व्रतम् । उक्थैर्य एं-
ः परिभूषति व्रतं स्तोमैराभूषति व्रतम् ॥ ५ ॥ नमो दिवे बृहते रोदसीभ्यां
त्राय वोचं वरुणाय मीळ्हुषे सुमृळीकाय मीळ्हुषे । इन्द्रमग्निमुप स्तुहि द्युक्षमर्य-
णं भगम् । ज्योग्जीवन्तः प्रजया सचेमहि सोमस्योती सचेमहि ॥ ६ ॥ ऊती
ानां वयमिन्द्रवन्तो मंसीमहि स्वयशसो मरुद्भिः । अग्निर्मित्रो वरुणः शर्म यंस-
 तदश्याम मघवानो वयं च ॥ ७ ॥ २६ ॥ १ ॥

॥ १३७ ॥ १–३ परुच्छेप ऋषिः । मित्रावरुणौ देवते ॥ छन्दः–१ निचृच्छ-
री । २ विराट्शक्करी । ३ भुरिगतिशक्करी ॥ स्वरः–१, २ गान्धारः । ३ पञ्चमः ॥

॥ १३७ ॥ सुषुमा यातमद्रिभिर्गोश्रीता मत्सरा इमे सोमासो मत्सरा इ
आ राजाना दिविस्पृशास्मत्रा गन्तमुप नः । इमे वां मित्रावरुणा गवाशिरः
मांः शुक्रा गवाशिरः ॥ १ ॥ इम आ यातमिन्दवः सोमासो दध्याशिरः सुता
दध्याशिरः । उत वामुषसो बुधि साकं सूर्यस्य रश्मिभिः । सुतो मित्राय वरु
य पीतये चारुर्ऋताय पीतये ॥ २ ॥ तां वां धेनुं न वासरीमंशुं दुहन्त्यद्रि
सोमं दुहन्त्यद्रिभिः । अस्मत्रा गन्तमुप नोऽर्वाञ्चा सोमपीतये । अयं वां मित्र
रुणा नृभिः सुतः सोम आ पीतये सुतः ॥ ३ ॥ १ ॥

॥ १३८ ॥ १-४ परुच्छेप ऋषिः ॥ पूषा देवता ॥ छन्दः-१, ३ निचृ
त्यष्टिः । २ विराडत्यष्टिः । ४ भुरिगष्टिः ॥ स्वरः-१-३ गान्धारः । ४ मध्यमः

॥ १३८ ॥ प्रप्र पूष्णस्तुविजातस्य शस्यते महित्वमस्य तवसो न तन्
स्तोत्रमस्य न तन्दते । अर्चामि सुम्नयन्नहमन्त्यूतिं मयोभुवम् । विश्वस्य यो
आयुयुवे मखो देव आयुयुवे मखः ॥ १ ॥ प्र हि त्वा पूषन्नजिरं न यामनि स
मेभिः कृण्व ऋणवो यथा मृध उष्ट्रो न पीपरो मृधः । हुवे यत्त्वा मयोभुवं
सख्याय मर्त्यः । अस्माकमाङ्गूषान्द्युम्निनस्कृधि वाजेषु द्युम्निनस्कृधि ॥
यस्य ते पूषन्त्सख्ये विपन्यवः क्रत्वा चित्सन्तोऽवसा बुभुज्रिर इति क्रत्वा
भुज्रिरे । तामनु त्वा नवीयसीं नियुतं राय ईमहे । अहेळमान उरुशंस सरी
वाजेवाजे सरी भव ॥ ३ ॥ अस्या ऊ षु ण उप सातये भुवोऽहेळमानो र
अजाश्व श्रवस्यतामजाश्व । ओ षु त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः ।
त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे ॥ ४ ॥ २ ॥

॥ १३९ ॥ १-११ परुच्छेप ऋषिः ॥ देवता- १ विश्वे देवाः । २ मित्र
रुणौ । ३-५ अश्विनौ । ६ इन्द्रः । ७ अग्निः । ८ मरुतः । ९ इन्द्राग्नी ।
बृहस्पतिः । ११ विश्वे देवाः ॥ छन्दः-१, १० निचृदष्टिः । २, ३ विराडष्टि
६ अष्टिः । ८ स्वराडत्यष्टिः । ४, ९ भुरिगत्यष्टिः । ७ अत्यष्टिः । ५ नि
द्बृहती । ११ भुरिक् पङ्क्तिः ॥ स्वरः-१-३, ६, १० गान्धारः । ४, ५, ७-
मध्यमः । ११ पञ्चमः ॥

॥ १३९ ॥ अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु तच्छर्धो दि
वृणीमह इन्द्रवायू वृणीमहे । यद्ध क्राणा विवस्वति नाभा सन्दायि नव्यसी ।

ूनु उप॑ यन्तु धी॒तयो॑ दे॒वाँ अच्छा न धी॒तय॑ः ॥ १ ॥ यद्ध त्यन्मि॑त्रावरुणावृ॒तद॒ध्या-
थे॒ अनृ॑तं॒ स्वेन॑ म॒न्युना॒ दक्ष॑स्य॒ स्वेन॑ म॒न्युना॑ । यु॒वोरि॒त्थाधि॒ सद्म॒स्वप॑श्याम
ण्यय॑ं । धी॒भिश्च॒न मन॑सा॒ स्वेभि॑र॒क्षभि॒ः सोम॑स्य॒ स्वेभि॑र॒क्षभि॑ः ॥ २ ॥ यु॒वां
मेभि॑र्दे॒वय॑न्तो॒ अश्विनाश्राव॑य॑न्त इ॒व श्लोक॑मा॒यवो॑ यु॒वां ह॒व्याभ्या॒३॑यवः॑ ।
र्विश्वा॒ अधि॒ श्रिय॒ः पृक्ष॑श्च विश्ववेदसा । प्रु॒षाय॑न्ते वां प॒वयो॑ हिर॒ण्यये॒ रथे॑
ा हिर॒ण्यये॑ ॥ ३ ॥ अचे॑ति दस्रा॒ व्यु॒१॑नाक॑मृण्वथो यु॒ञ्जते॑ वां रथ॒युजो॒ दि-
ष्टिष्वध्व॒स्मानो॒ दिवि॑ष्टिषु । अधि॑ वां॒ स्थाम॑ व॒न्धुरे॒ रथे॑ दस्रा हिर॒ण्यये॑ । प॒थेव॒
ावनुशास॑ता॒ रजोऽञ्ज॑सा॒ शास॑ता॒ रज॑ः ॥ ४ ॥ शची॑भिर्नः शचीवसू दिवा॒
ः दशस्यतम् । मा वां रा॒तिरुप॑ दस॒त्कदा॑ च॒नास्मद्रा॒तिः कदा॑ च॒न ॥ ५ ॥ ३ ॥
न्निन्द्र वृषपाण॒ास॒ इन्द॑व इ॒मे सु॒ता अद्रि॑षुतास उ॒द्भिद॒स्तुभ्यं॑ सु॒तास॑ उ॒द्भिद॑ः ।
त्वा॑ मन्दन्तु दा॒वने॑ म॒हे चि॒त्राय॒ राध॑से । गी॒र्भिर्गि॑र्वाहः॒ स्तव॑मान॒ आ ग॑हि
ळी॒को न॒ आ ग॑हि ॥ ६ ॥ ओ षू णो॑ अग्ने शृणुहि॒ त्वमी॑ळि॒तो दे॒वेभ्यो॑ ब्र-
से य॒ज्ञियो॑भ्यो॒ राज॑भ्यो य॒ज्ञियो॑भ्यः । यद्ध त्यामङ्गि॑रोभ्यो धे॒नुं दे॑वा॒ अद॑त्तन ।
तां दु॑हे अर्य॒मा क॒र्तरी॒ सचाँ॑ ए॒ष तां वे॑द मे॒ सचा॑ ॥ ७ ॥ मो षु वो॑ अ॒स्म-
भि तानि॒ पौंस्या॒ सना॑ भूवन्द्यु॒म्नानि॒ मोत जा॑रिषुर॒स्मत्पु॒रोत जा॑रिषुः । यद्व॑-
चि॒त्रं यु॒गेयु॑गे॒ नव्यं॒ घोषा॒दम॑र्त्यम् । अ॒स्मासु॒ तन्म॑रुतो॒ यच्च॑ दु॒ष्टरं॑ दि॒धृता॒ यच्च॑
रम् ॥ ८ ॥ द॒ध्यङ् ह॑ मे ज॒नुषं॒ पूर्वो॒ अङ्गि॑राः प्रि॒यमे॑धः॒ कण्वो॒ अत्रि॒र्मनु॑र्विदु-
मे॒ पूर्वे॒ मनु॑र्विदुः । तेषां॑ दे॒वेष्वाय॑तिर॒स्माकं॒ तेषु॒ नाभ॑यः । तेषां॑ प॒देन॒ मह्या
गि॒रेन्द्रा॒ग्नी आ न॑मे गि॒रा ॥ ९ ॥ होता॑ यक्षद्व॒निनो॑ वन्त॒ वार्यं॒ बृह॒स्पति॑-
ति वे॒न उ॒क्षभि॑ः पुरु॒वारे॑भिरु॒क्षभि॑ः । जगृ॒भ्मा दू॒रआ॑दिशं॒ श्लोक॒मद्रे॒रध॒ त्म-
। अधा॑रयदर॒रिन्दा॑नि सु॒क्रतु॑ः पु॒रू सद्मा॑नि सु॒क्रतु॑ः ॥ १० ॥ ये दे॑वासो दि॒-
का॑दश॒ स्थ पृ॑थि॒व्यामध्येका॑दश॒ स्थ । अ॒प्सु॒क्षितो॑ महि॒नैका॑दश॒ स्थ ते दे॑वासो
ामि॒मं जु॑षध्वम् ॥ ११ ॥ ४ ॥ २० ॥

॥ १४० ॥ १-१३ दीर्घतमा ऋषिः ॥ अग्निर्देवता ॥ छन्दः-१, ५, ८
ती । २, ७, ११ विराड्जगती । ३, ४, ९ निचृज्जगती च । ६ भुरिक् त्रि-
। १०, १२ निचृत् त्रिष्टुप् । १३ पङ्क्तिः ॥ स्वरः-१-५, ७-९, ११ निषादः ।
१०, १२, धैवतः । १३ पञ्चमः ॥

॥ १४० ॥ वे॒दि॒षदे॑ प्रि॒यधा॑माय सु॒द्युते॑ धा॒सिमि॑व॒ प्र भ॑रा॒ योनि॑म॒ग्नये॑ ।

वस्त्रेणेव वासया मन्मना शुचिं ज्योतीरथं शुक्रवर्णं तमोहनम् ॥ १ ॥ अभि
जन्मा त्रिवृदन्नमृज्यते संवत्सरे वावृधे जग्धमी पुनः । अन्यस्यासा जिह्वया जे
वृषा न्यन्येन वनिनो मृष्ट वारणः ॥ २ ॥ कृष्णप्रुतौ वेविजे अस्य सक्षिता उ
तरेते अभि मातरा शिशुम् । प्राचाजिह्वं ध्वसयन्तं तृषुच्युतमा साच्यं कुपयं
धनं पितुः ॥ ३ ॥ मुमुक्ष्वो मनवे मानवस्यते रघुद्रुवः कृष्णसीतास ऊ जुवं
असमना अजिरासो रघुष्यदो वातजूता उप युज्यन्त आशवः ॥ ४ ॥ आदस्य
ध्वसयन्तो वृथेरते कृष्णमभ्वं महि वर्पः करिक्रतः । यत्सीं महीमवनिं प्राभि
मृशदभिश्वसन्स्तनयन्नेति नानदत् ॥ ५ ॥ ५ ॥ भूषन्न योऽधि बभ्रूषु नम्नते
षेव पत्नीरभ्येति रोरुवत् । ओजायमानस्तन्वश्च शुम्भते भीमो न शृङ्गा दविध
दुर्गृभिः ॥ ६ ॥ स संस्तिरो विष्टिरः सं गृभायति जानन्नेव जानतीर्नित्य
शये । पुनर्वर्धन्ते अपि यन्ति देव्यमन्यद्वर्पः पित्रोः कृण्वते सचा ॥ ७ ॥ तमग्र
केशिनीः सं हि रेभिर ऊर्ध्वास्तस्थुर्मम्रुषीः प्रायवे पुनः । तासां जरां प्रमुञ्चन्
नानदद्दसुं परं जनयञ्जीवमस्तृतम् ॥ ८ ॥ अधीवासं परि मातू रिहन्नह तुविग्रे
सत्वभिर्याति वि ज्रयः । वयो दधत्पद्वते रेरिहत्सदानु श्येनी सचते वर्तनी
॥ ९ ॥ अस्माकमग्ने मघवत्सु दीदिह्यध श्वसीवान्वृषभो दमूनाः । अवास्या शि
मतीरदीदेर्वर्मेव युत्सु परिजर्भुराणः ॥ १० ॥ ६ ॥ इदमग्ने सुधितं दुर्धिताधि
यादु चिन्मन्मनः प्रेयो अस्तु ते । यत्ते शुक्रं तन्वो रोचते शुचि तेनास्मभ्यं व
रत्नमा त्वम् ॥ ११ ॥ रथाय नावमुत नो गृहाय नित्यारित्रां पद्वतीं रास्यग्ने ।
स्माकं वीराँ उत नो मघोनो जनाँश्च या पारयाच्छर्म या च ॥ १२ ॥ अभी
अग्न उक्थमिज्जुगुर्या द्यावाक्षामा सिन्धवश्च स्वगूर्ताः । गव्यं यव्यं यन्तो दी
हेषं वरमरुण्यो वरन्त ॥ १३ ॥ ७ ॥

॥ १४१ ॥ १—१३ दीर्घतमा ऋषिः ॥ अग्निर्देवता ॥ छन्दः—१,
३, ६, ११ जगती । ४, ७, ९, १० निचृज्जगती । ५ स्वराट् त्रिष्टुप् । ८
रिक् त्रिष्टुप् । १२ भुरिक् पङ्क्तिः । १३ स्वराट् पङ्क्तिः ॥ स्वरः—१—४, ६,
९—११ निषादः । ५, ८ धैवतः । १२, १३ पञ्चमः ॥

॥ १४१ ॥ बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जा
यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥ १ ॥ पृक्षो वपुः
तुमान्नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु । तृतीयमस्य वृषभस्य दोहसे

प्रमतिं जनयन्त योषणः ॥ २ ॥ निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा
न्त सूरयः । यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥ ३ ॥
यत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति । उभा उदस्य जनुषं य-
न्वत आदिद्यविष्ठो अभवद्घृणा शुचिः ॥ ४ ॥ आदिन्मातृराविशद्यास्वा शुचि-
हिंस्यमान उर्विया वि वावृधे । अनु यत्पूर्वा अरुहत्सनाजुवो नि नव्यसीष्ववं-
सु धावते ॥ ५ ॥ ८ ॥ आदिद्धोतारं वृणते दिविष्टिषु भगमिव पपृचानास
ञ्जते । देवान्यत्क्रत्वा मज्मना पुरुष्टुतो मर्तं शंसं विश्वधा वेति धायसे ॥ ६ ॥
यदस्थाद्यजतो वातचोदितो ह्वारो न वक्वा जरणा अनाकृतः । तस्य पत्मन्द-
षः कृष्णजंहसः शुचिजन्मनो रज आ व्यध्वनः ॥ ७ ॥ रथो न यातः शिक्वभिः
तो द्यामङ्गेभिररुषेभिरीयते । आदस्य ते कृष्णासो दक्षि सूरयः शूरस्येव त्वेष-
दीषते वयः ॥ ८ ॥ त्वया ह्यग्ने वरुणो धृतव्रतो मित्रः शाशद्रे अर्यमा सुदानवः ।
सीमनु क्रतुना विश्वथा विभुररान्न नेमिः परिभूरजायथाः ॥ ९ ॥ त्वमग्ने शा-
मानाय सुन्वते रत्नं यविष्ठ देवतातिमिन्वसि । तं त्वा नु नव्यं सहसो युवन्वयं
गं न कारे महिरत्न धीमहि ॥ १० ॥ अस्मे रयिं न स्वर्थं दमूनसं भगं दक्षं न
चासि धर्णसिम् । रश्मीरिव यो यमति जन्मनी उभे देवानां शंसमृत आ च
क्रतुः ॥ ११ ॥ उत नः सुद्योत्मा जीराश्वो होता मन्द्रः शृणवच्चन्द्ररथः । स
नेषन्नेषतमैरमूरोऽग्निर्वामं सुवितं वस्यो अच्छ ॥ १२ ॥ अस्ताव्यग्निः शि-
वद्भिरर्कैः साम्राज्याय प्रतरं दधानः । अमी च ये मघवानो वयं च मिहं न सूरो
ति निष्टतन्युः ॥ १३ ॥ ९ ॥

॥ १४२ ॥ १—१३ दीर्घतमा ऋषिः ॥ देवता—१, २, ३, ४ अग्निः ।
बर्हिः । ६ देव्यो द्वारः । ७ उषासानक्ता । ८ दैव्यौ होतारौ । ९ सरस्वती-
भारत्यः । १० त्वष्टा । ११ वनस्पतिः । १२ स्वाहाकृतिः । १३ इन्द्रश्च ॥
न्दः—१, २, ५, ६, ८, ९ निचृदनुष्टुप् । ४ स्वराडनुष्टुप् । ३, ७, १०, ११,
२ अनुष्टुप् । १३ भुरिगुष्णिक् ॥ स्वरः—१—१२ गन्धारः । १३ ऋषभः ॥

॥ १४२ ॥ समिद्धो अग्न आ वह देवाँ अद्य यतस्रुचे । तन्तुं तनुष्व पूर्व्यं सु-
सोमाय दाशुषे ॥ १ ॥ घृतवन्तमुप मासि मधुमन्तं तनूनपात् । यज्ञं विप्रस्य मावतः
शशमानस्य दाशुषः ॥ २ ॥ शुचिः पावको अद्भुतो मध्वा यज्ञं मिमिक्षति । न-
राशंसस्त्रिरा दिवो देवो देवेषु यज्ञियः ॥ ३ ॥ ईळितो अग्न आ वहेन्द्रं चित्रमिह

प्रियम् । इयं हि त्वा मतिर्ममाच्छा सुजिह्व वच्यते ॥ ४ ॥ स्तृणानासो यतस्रु
बर्हिर्यज्ञे स्वध्वरे । वृञ्जे देवव्यचस्तममिन्द्राय शर्म सप्रथः ॥ ५ ॥ वि श्रयन्तामृ
वृधः प्रयै देवेभ्यो महीः । पावकासः पुरुस्पृहो द्वारो देवीरसश्चतः ॥ ६ ॥ १०
आ भन्दमाने उपाके नक्तोषासा सुपेशसा । यह्वी ऋतस्य मातरा सीदतां ब
रा सुमत् ॥ ७ ॥ मन्द्रजिह्वा जुगुर्वणी होतारा दैव्या कवी । यज्ञं नो यक्षता
सिध्रमद्य दिविस्पृशम् ॥ ८ ॥ शुचिर्देवेष्वर्पिता होत्रा मरुत्सु भारती । इळा स
स्वती मही बर्हिः सीदन्तु यज्ञियाः ॥ ९ ॥ तन्नस्तुरीपमद्भुतं पुरु वारं पुरुत्मना । त्व
पोषाय वि ष्यतु राये नाभा नो अस्मयुः ॥ १० ॥ अवसृजन्नुप त्मना देवान्य
वनस्पते । अग्निर्हव्या सुषूदति देवो देवेषु मेधिरः ॥ ११ ॥ पूषण्वते मरुत्वते
श्वदेवाय वायवे । स्वाहा गायत्रवेपसे हव्यमिन्द्राय कर्तन ॥ १२ ॥ स्वाहाकृता
गह्युप हव्यानि वीतये । इन्द्रा गहि श्रुधी हवं त्वां हवन्ते अध्वरे ॥ १३ ॥ १

॥ १४३ ॥ १–८ दीर्घतमा ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, ७ निचृ
गती । २, ३, ५ विराड्जगती । ४, ६ जगती च । ८ निचृत् त्रिष्टुप् ॥ स्वरः–१
निषादः । ८ धैवतः ॥

॥ १४३ ॥ प्र तव्यसीं नव्यसीं धीतिमग्नये वाचो मतिं सहसः सूनवे भरे
अपां नपाद्यो वसुभिः सह प्रियो होता पृथिव्यां न्यसीदद्दृत्वियः ॥ १ ॥ स ज
मानः परमे व्योमन्याविरग्निरभवन्मातरिश्वने । अस्य क्रत्वा समिधानस्य मज्म
प्र द्यावा शोचिः पृथिवी अरोचयत् ॥ २ ॥ अस्य त्वेषा अजरा अस्य भान
सुसन्दृशः सुप्रतीकस्य सुद्युतः । भात्वक्षसो अत्यक्तुर्न सिन्धवोऽग्ने रेजन्ते अस
अजराः ॥ ३ ॥ यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना
अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति ॥ ४ ॥ न
वराय मरुतामिव स्वनः सेनेव सृष्टा दिव्या यथाशनिः । अग्निर्जम्भैस्तिगितैरत्ति
वीति योधो न शत्रून्त्स वना न्यृञ्जते ॥ ५ ॥ कुविन्नो अग्निरुचथस्य वीरसद्वसु
विद्वसुभिः काममावरत् । चोदः कुवित्तुतुज्यात्सातये धियः शुचिप्रतीकं तमया धि
गृणे ॥ ६ ॥ घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋञ्जते । इन्धा
अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियम् ॥ ७ ॥ अप्रयुच्छन्नप्रयुच्छ
रग्ने शिवेभिर्नः पायुभिः पाहि शग्मैः । अदब्धेभिरदृपितेभिरिष्टेऽनिमिषद्भिः प
पाहि नो जाः ॥ ८ ॥ १२ ॥

॥ १४४ ॥ १–७ दीर्घतमा ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, ३, ४, ५, ७ [नि]चृज्जगती । २ जगती । ६ भुरिक्पङ्क्तिः ॥ स्वरः–१–५, ७ निषादः । ६ पञ्चमः ॥

॥ १४४ ॥ एति प्र होता व्रतमस्य माययोर्ध्वां दधानः शुचिपेशसं धियम् । [अ]भि स्रुचः क्रमते दक्षिणावृतो या अस्य धाम प्रथमं ह निंसते ॥ १ ॥ अभीमृ[त]स्य दोहना अनूषत योनौ देवस्य सदने परीवृताः । अपामुपस्थे विभृतो यदा[व]सदध स्वधा अधयद्याभिरीयते ॥ २ ॥ युयूषतः सवयसा तदिद्वपुः समानमर्थं [वि]तरित्रता मिथः । आदीं भगो न हव्यः समस्मदा वोळ्हुर्न रश्मीन्त्समयंस्त सा[र]थिः ॥ ३ ॥ यमीं द्वा सवयसा सपर्यतः समाने योना मिथुना समोकसा । दिवा [न] नक्तं पलितो युवाजनि पुरू चरन्नजरो मानुषा युगा ॥ ४ ॥ तमीं हिन्वंति [धी]तयो दश व्रिशो देवं मर्तास ऊतये हवामहे । धनोरधि प्रवत आ स ऋण्वत्य[भि]व्रजद्भिर्वयुना नवाधित ॥ ५ ॥ त्वं ह्यग्ने दिव्यस्य राजसि त्वं पार्थिवस्य पशुपा [इ]व त्मना । एनी त एते बृहती अभिश्रिया हिरण्ययी वक्वरी बर्हिराशाते ॥ ६ ॥ अग्ने जुषस्व प्रति हर्य तद्वचो मन्द्र स्वधाव ऋतजात सुक्रतो । यो विश्वतः प्रत्य[]ङ्ङसि दर्शतो रण्वः सन्दृष्टौ पितुमाँ इव क्षयः ॥ ७ ॥ १३ ॥

॥ १४५ ॥ १–५ दीर्घतमा ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१ विराड्[ज]गती । २, ५ निचृज्जगती च । ३ । ४ भुरिक् त्रिष्टुप् ॥ स्वरः–१, २, ५ नि[ष]ादः । ३, ४ धैवतः ॥

॥ १४५ ॥ तं पृच्छता स जगामा स वेद स चिकित्वाँ ईयते सा न्वीयते । [त]स्मिन्त्सन्ति प्रशिषस्तस्मिन्निष्टयः स वाजस्य शवसः शुष्मिणस्पतिः ॥ १ ॥ त[मि]त्पृच्छन्ति न सिमो वि पृच्छति स्वेनेव धीरो मनसा यदग्रभीत् । न मृष्यते [प्र]थमं नापरं वचोऽस्य क्रत्वा सचते अप्रदृपितः ॥ २ ॥ तमिद्गच्छन्ति जुह्वस्तम[र्व]तीर्विश्वान्येकः शृणवद्वचांसि मे । पुरुप्रैषस्ततुरिर्यज्ञसाधनोऽच्छिद्रोतिः शिशु[रा]दत्त सं रभः ॥ ३ ॥ उपस्थायं चरति यत्समारत सद्यो जातस्तत्सार युज्येभिः । [अ]भि श्वान्तं मृशते नान्द्ये मुदे यदीं गच्छन्त्युशतीरपिष्ठितम् ॥ ४ ॥ स ईं मृगो [अ]प्यो वनर्गुरुप त्वच्युपमस्यां नि धायि । व्यब्रवीद्वयुना मर्त्येभ्योऽग्निर्विद्वाँ ऋ[त]चिद्धि सत्यः ॥ ५ ॥ १४ ॥

॥ १४६ ॥ १–५ दीर्घतमा ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, २ विराट्[]त्रिष्टुप् । ३, ५ त्रिष्टुप् । ४ निचृत् त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ १४६ ॥ त्रिमूर्धानं सप्तरश्मिं गृणीषेऽनूनमग्निं पित्रोरुपस्थे । निषत्तम
स्य । चरतो ध्रुवस्य विश्वा दिवो रोचनापप्रिवांसम् ॥ १ ॥ उक्षा महाँ अ
ववक्ष एने अजरस्तस्थावितऊतिर्ऋष्वः । उर्व्याः पदो नि दधाति सानौ रि
न्त्यूधो अरुषासो अस्य ॥ २ ॥ समानं वत्समभि सञ्चरन्ती विष्वग्धेनू वि चरत
सुमेके । अनपवृज्याँ अध्वनो मिमाने विश्वान्केताँ अधि महो दधाने ॥ ३ ॥ धी
रासः पदं कवयो नयन्ति नाना हृदा रक्षमाणा अजुर्यम् । सिषासन्तः पर्यपश्य
न्त सिन्धुमाविरेभ्यो अभवत्सूर्यो नॄन् ॥ ४ ॥ दिदृक्षेण्यः परि काष्ठासु जेन्
ईळेन्यो महो अर्भाय जीवसे । पुरुत्रा यदभवत्सूरहैभ्यो गर्भेभ्यो मघवा विश्व
दर्शतः ॥ ५ ॥ १५ ॥

॥ १४७ ॥ १–५ दीर्घतमा ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, ३, ४,
निचृत् त्रिष्टुप् । २ विराट् त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ १४७ ॥ कथा ते अग्ने शुचयन्त आयोर्ददाशुर्वाजेभिराशुषाणाः । उ
यत्तोके तनये दधाना ऋतस्य सामन्रणयन्त देवाः ॥ १ ॥ बोधा मे अस्य वच
यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः । पीयति त्वो अनु त्वो गृणाति वन्दारु
तन्वं वन्दे अग्ने ॥ २ ॥ ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरिताद
क्षन् । ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥ ३ ॥ यो
अग्ने अररिवाँ अघायुररातीवा मर्चयति द्वयेन । मन्त्रो गुरुः पुनरस्तु सो अस
अनु मृक्षीष्ट तन्वं दुरुक्तैः ॥ ४ ॥ उत वा यः सहस्य प्रविद्वान्मर्तो मर्तं मर्चय
द्वयेन । अतः पाहि स्तवमान स्तुवन्तमग्ने माकिर्नो दुरिताय धायीः ॥ ५ ॥ १६

॥ १४८ ॥ १–५ दीर्घतमा ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, २ पङ्क्तिः
५ स्वराट् पङ्क्तिः । ३, ४ निचृत् त्रिष्टुप् ॥ स्वरः–१, २, ५ पञ्चमः । ३, ४ धैवतः

॥ १४८ ॥ मथीद्यदीं विष्टो मातरिश्वा होतारं विश्वाप्सुं विश्वदेव्यम् ।
यं दधुर्मनुष्यासु विक्षु स्वर्णं चित्रं वपुषे विभावम् ॥ १ ॥ ददानमित्र ददभ
मन्माग्निर्वरूथं मम तस्य चाकन् । जुषन्त विश्वान्यस्य कर्मोपस्तुतिं भरमाण
कारोः ॥ २ ॥ नित्ये चिन्नु यं सदने जगृभ्रे प्रशस्तिभिर्दधिरे यज्ञियासः । प्र
नयन्त गृभयन्त इष्टावश्वासो न रथ्यो रारहाणाः ॥ ३ ॥ पुरूणि दस्मो नि
णाति जम्भैराद्रोचते वन आ विभावा । आदस्य वातो अनु वाति शोचिरस्

र्षीमसनामनु द्यून् ॥ ४ ॥ न यं रिपवो न रिषण्यवो गर्भे सन्तं रेषणा रेषयन्ति ।
न्धा अपश्या न दभन्नभिख्या नित्यास ईं प्रेतारो अरक्षन् ॥ ५ ॥ १७ ॥

॥ १४९ ॥ १-५ दीर्घतमा ऋषिः ॥ अग्निर्देवता ॥ छन्दः-१ भुरिगनु-
ष्टुप् । २, ४ निचृदनुष्टुप् । ५ विराडनुष्टुप् । ३ उष्णिक् ॥ स्वरः-१, २, ४,
गान्धारः । ३ ऋषभः ॥

॥ १४९ ॥ महः स राय एषते पतिर्दन्निन इनस्य वसुनः पद आ । उप
जन्तमद्रयो विधन्नित् ॥ १ ॥ स यो वृषा नरां न रोदस्योः श्रवोभिरस्ति जी-
पीतसर्गः । प्र यः सस्राणः शिश्रीत योनौ ॥ २ ॥ आ यः पुरं नार्मिणीमदी-
दत्यः कविर्नभन्यो३नार्वा । सूरो न रुरुक्वाञ्छतात्मा ॥ ३ ॥ अभि द्विजन्मा त्री
चनानि विश्वा रजांसि शुशुचानो अस्थात् । होता यजिष्ठो अपां सधस्थे ॥ ४ ॥
यं स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या । मर्तो यो अस्मै सुतु-
ो ददाश ॥ ५ ॥ १८ ॥

॥ १५० ॥ १-३ दीर्घतमा ऋषिः ॥ अग्निर्देवता ॥ छन्दः-१, ३ भुरि-
गायत्री । २ निचृदुष्णिक् ॥ स्वरः-१, ३ षड्जः । २ ऋषभः ॥

॥ १५० ॥ पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा । तोदस्येव शरण आ
हस्य ॥ १ ॥ व्यनिनस्य धनिनः प्रहोषे चिदररुषः । कदा चन प्रजिगतो अदे-
योः ॥ २ ॥ स चन्द्रो विप्र मर्त्यो महो व्राधन्तमो दिवि । प्रप्रेत्ते अग्ने वनुषः
याम ॥ ३ ॥ १९ ॥

॥ १५१ ॥ १-९ दीर्घतमा ऋषिः ॥ मित्रावरुणौ देवते ॥ छन्दः-१ भुरिक्
त्रिष्टुप् । २, ३, ४, ५ विराट् जगती । ६, ७ जगती । ८, ९ निचृज्जगती च ॥
वरः-१ धैवतः । २-९ निषादः ॥

॥ १५१ ॥ मित्रं न यं शिम्या गोषु गव्यवः स्वाध्यो विदथे अप्सु जीजन-
। अरेजेतां रोदसी पाजसा गिरा प्रति प्रियं यजतं जनुषामवः ॥ १ ॥ यद्ध
यद्वां पुरुमीळ्हस्य सोमिनः प्र मित्रासो न दधिरे स्वाभुवः । अध क्रतुं विदतं
ातुमर्चत उत श्रुतं वृषणा पस्त्यावतः ॥ २ ॥ आ वां भूषन्क्षितयो जन्म रोद-
्योः प्रवाच्यं वृषणा दक्षसे महे । यदीमृताय भरथो यदर्वते प्र होत्रया शिम्या

वीथो अध्वरम् ॥ ३ ॥ प्र सा क्षितिरसुर या महिं प्रिय ऋतावानावृतमा घोष
बृहत् । युवं दिवो बृहतो दक्षमाभुवं गां न धुर्युप युञ्जाथे अपः ॥ ४ ॥ म
अत्रे महिना वारमृण्वथोऽरेणवस्तुज आ सद्मन्धेनवः । स्वरन्ति ता उपरताति
र्येमा निम्रुचं उषसस्तक्वीरिव ॥ ५ ॥ २० ॥ आ वामृताय केशिनीरनूषत मि
यत्र वरुण गातुमर्चथः । अव त्मना सृजतं पिन्वतं धियो युवं विप्रस्य मन्मना
रज्यथः ॥ ६ ॥ यो वां यज्ञैः शशमानो ह दाशति कविर्होता यजति मन्मसाधनः
उपाह तं गच्छथो वीथो अध्वरमच्छा गिरः सुमतिं गन्तमस्मयू ॥ ७ ॥ युवां य
प्रथमा गोभिरञ्जत ऋतावाना मनसो न प्रयुक्तिषु । भरन्ति वां मन्मना संय
गिरोऽदृप्यता मनसा रेवदाशाथे ॥ ८ ॥ रेवद्वयो दधाथे रेवदाशाथे नरा माय
भिरितऊति माहिनम् । न वां द्यावोऽहभिर्नोत सिन्धवो न देवत्वं पणयो नान
मघम् ॥ ९ ॥ २१ ॥

॥ १५२ ॥ १—७ दीर्घतमा ऋषिः ॥ मित्रावरुणौ देवते ॥ छन्दः—१,
४, ५, ६ त्रिष्टुप् । ३ विराट् त्रिष्टुप् । ७ निचृत्त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ १५२ ॥ युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः ।
वातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे ॥ १ ॥ एतच्चन त्वो वि चि
तदेषां सत्यो मन्त्रः कविशस्त ऋघावान् । त्रिरश्रिं हन्ति चतुरश्रिरुग्रो देवनिदो
प्रथमा अजूर्यन् ॥ २ ॥ अपादेति प्रथमा पद्वतीनां कस्तद्वां मित्रावरुणा चिकेत
गर्भो भारं भरत्या चिदस्य ऋतं पिपर्त्यनृतं नि तारीत् ॥ ३ ॥ प्रयन्तमित्परि ज
कनीनां पश्यामसि नोपनिपद्यमानम् । अनवपृग्णा वितता वसानं प्रियं मित्र
वरुणस्य धाम ॥४॥ अनश्वो जातो अनभीशुरर्वा कनिक्रदत्पतयदूर्ध्वसानुः ।
चित्तं ब्रह्म जुजुषुर्युवानः प्र मित्रे धाम वरुणे गृणन्तः ॥ ५ ॥ आ धेनवो माम
यमवन्तीर्ब्रह्मप्रियं पीपयन्त्सस्मिन्नूधन् । पित्वो भिक्षेत वयुनानि विद्वानासावि
सन्नदितिमुरुष्येत् ॥६॥ आ वां मित्रावरुणा हव्यजुष्टिं नमसा देवाववसा ववृत्याम
अस्माकं ब्रह्म पृतनासु सह्या अस्माकं वृष्टिर्दिव्या सुपारा ॥ ७ ॥ २२ ॥

॥ १५३ ॥ १–४ दीर्घतमा ऋषिः ॥ मित्रावरुणौ देवते ॥ छन्दः–१,
निचृत् त्रिष्टुप् । ३ त्रिष्टुप् । ४ भुरिक्पङ्क्तिः ॥ स्वरः–१–३ धैवतः । ४ पञ्चमः

॥ १५३ ॥ यजामहे वां महः सजोषा हव्येभिर्मित्रावरुणा नमोभिः । घ

स्नू अध यद्वामस्मे अध्वर्यवो न धीतिभिर्भरन्ति ॥ १ ॥ प्रस्तुतिर्वां धाम न प्रयु-
रयामि मित्रावरुणा सुवृक्तिः । अनक्ति यद्वां विदथेषु होता सुम्नं वां सूरिर्वृ-
णावियक्षन् ॥ २ ॥ पीपाय धेनुरदितिर्ऋताय जनाय मित्रावरुणाहविर्दे । हि-
ति यद्वां विदथे सपर्यन्त्स रातहव्यो मानुषो न होता ॥ ३ ॥ उत वां विक्षु म-
स्वन्धो गाव आपश्च पीपयन्त देवीः । उतो नो अस्य पूर्व्यः पतिर्दन्वीतं पातं
स उस्रियायाः ॥ ४ ॥ २३ ॥

॥ १५४ ॥ १–६ दीर्घतमा ऋषिः ॥ विष्णुर्देवता ॥ छन्दः–१, २, वि-
ट्त्रिष्टुप् । ३, ४, ६ निचृत्त्रिष्टुप् । ५ त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ १५४ ॥ विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥१॥ प्र तद्विष्णुः स्तवते वीर्येण
गो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि वि-
॥ २ ॥ प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे । य इदं दीर्घं
यतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥ ३ ॥ यस्य त्री पूर्णा मधुना पदान्य-
यमाणा स्वधया मदन्ति । य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि
श्वा ॥ ४ ॥ तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति । उरु-
स्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ ५ ॥ ता वां वास्तू-
श्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः पर-
पदमव भाति भूरि ॥ ६ ॥ २४ ॥

॥ १५५ ॥ १–६ दीर्घतमा ऋषिः ॥ विष्णुर्देवता ॥ छन्दः–१, ३, ६
रिक् त्रिष्टुप् ।४ स्वराट् त्रिष्टुप् ।५ निचृत् त्रिष्टुप् । २ निचृज्जगती ॥ स्वरः–१,
–६ धैवतः । २ निषादः ॥

॥ १५५ ॥ प्र वः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्चत । या
नुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना ॥ १ ॥ त्वेषमित्था समरणं
मीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति । या मर्त्याय प्रतिधीयमानमित्कृशानो-
तुरसनामुरुष्यथः ॥ २ ॥ ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मातरा नयति रेतसे
। दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ॥ ३ ॥ तत्तदिद-
पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य मीळ्हुषः । यः पार्थिवानि त्रिभिरिद्विगाम-

भिरुरुक्रमिष्ठोरुगायाय जीवसे ॥ ४ ॥ द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय म
भुरण्यति । तृतीयमस्य नकिरा दधर्षति वयश्चन पतयन्तः पतत्रिणः ॥ ५ ॥
तुभिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् । बृहच्छरीरो विमि
ऋक्वभिर्युवाकुमारः प्रत्येत्याहवम् ॥ ६ ॥ २५ ॥

॥ १५६ ॥ १–५ दीर्घतमा ऋषिः ॥ विष्णुर्देवता ॥ छन्दः– १ निचृ
ष्टुप् । २ विराट् त्रिष्टुप् । ५ स्वराट् त्रिष्टुप् । ३ निचृज्जगती । ४ जगत
स्वरः–१, २, ५, धैवतः । ३, ४ निषादः ॥

॥ १५६ ॥ भवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथ
अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ॥ १ ॥ यः पूर्व
वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति । यो जातमस्य महतो महि ब्रव
श्रवोभिर्युज्यं चिदभ्यसत् ॥ २ ॥ तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं
नुषा पिपर्तन । आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भज
॥ ३ ॥ तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः । दाधा
क्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुते ॥ ४ ॥ आ यो विवाय
थाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः । वेधा अजिन्वत्त्रिषधस्थ आर्यमृ
भागे यजमानमाभजत् ॥ ५ ॥ २६ ॥ २१ ॥

॥ १५७ ॥ १–६ दीर्घतमा ऋषिः ॥ अश्विनौ देवते ॥ छन्दः–१ त्रिष्
५ निचृत्त्रिष्टुप् । ६ विराट् त्रिष्टुप् । २, ४ जगती । ३ निचृज्जगती ॥ स्वरः–
५, ६ धैवतः । २, ३, ४ निषादः ॥

॥ १५७ ॥ अबोध्यग्निर्ज्म उदेति सूर्यो व्युषाश्चन्द्रा मह्यावो अर्चिषा ।
युञ्जातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत्पृथक् ॥ १ ॥ यद्युञ्जाथे वृषण
श्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम् । अस्माकं ब्रह्म पृतनासु जिन्वतं वयं ध
शूरसाता भजेमहि ॥ २ ॥ अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनो
सुष्टुतः । त्रिवन्धुरो मघवा विश्वसौभगः शं न आ वक्षद्द्विपदे चतुष्पदे ॥ ३ ॥
न ऊर्जं वहतमश्विना युवं मधुमत्या नः कशया मिमिक्षतम् । प्रायुस्तारिष्टं नी
पांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥ ४ ॥ युवं ह गर्भं जगतीषु धत्थो
विश्वेषु भुवनेष्वन्तः । युवमग्निं च वृषणावपश्च वनस्पतींरश्विनावैरयेथाम् ॥ ५

हं स्थो भिषजा भेषजेभिरथो ह स्थो रथ्या३राथ्येभिः। अथो ह क्षत्रमधि धत्थ
यो वां हविष्मान्मनसा ददाश ॥ ६ ॥ २७ ॥ २ ॥

॥ १५८ ॥ १–६ दीर्घतमा ऋषिः ॥ अश्विनौ देवते ॥ छन्दः–१, ४, ५
वृत् त्रिष्टुप्। २ त्रिष्टुप्। ३ भुरिक् पङ्क्तिः। ६ निचृदनुष्टुप्॥ स्वरः–१, २, ४,
वतः। ३ पञ्चमः। ६ गान्धारः॥

॥ १५८ ॥ वसू रुद्रा पुरुमन्तू वृधन्ता दशस्यतं नो वृषणावभिष्टौ। दस्रा ह
क्णं औचथ्यो वां प्र यत्सस्राथे अकवाभिरूती ॥ १ ॥ को वां दाशत्सुमतये
स्यै वसू यद्धेथे नमसा पदे गोः। जिगृतमस्मे रेवतीः पुरंधीः कामप्रेणेव म-
चरन्ता ॥ २ ॥ युक्तो ह यद्वां तौग्र्याय पेरुर्वि मध्ये अर्णसो धायि पज्रः।
वामवः शरणं गमेयं शूरो नाज्म पतयद्भिरेवैः ॥ ३ ॥ उपस्तुतिरौचथ्यमुरुष्ये-
मामिमे पतत्रिणी वि दुग्धाम्। मा मामेधो दशतयश्चितो धाक् प्र यद्वां ब-
त्मनि खादति क्षाम् ॥ ४ ॥ न मा गरन्नद्यो मातृतमा दासा यदीं सुसमुब्ध-
र्धुः। शिरो यदस्य त्रैतनो वितक्षत्स्वयं दास उरो अंसावपि ग्ध ॥ ५ ॥ दी-
मा मामतेयो जुजुर्वान्दशमे युगे। अपामर्थं यतीनां ब्रह्मा भवति सारथिः ॥ ६ ॥ १ ॥

॥ १५९ ॥ १–५ दीर्घतमा ऋषिः ॥ द्यावापृथिव्यौ देवते ॥ छन्दः–१ वि-
जगती। २, ३, ५ निचृज्जगती। ४ जगती च ॥ निषादः स्वरः ॥

॥ १५९ ॥ प्र द्यावा यज्ञैः पृथिवी ऋतावृधा मही स्तुषे विदथेषु प्रचेतसा।
भिर्ये देवपुत्रे सुदंससेत्था धिया वार्याणि प्रभूषतः ॥ १ ॥ उत मन्ये पितुर-
मनो मातुर्महि स्वतवस्तद्धवीमभिः। सुरेतसा पितरा भूम चक्रतुरुरु प्रजाया
तं वरीमभिः ॥ २ ॥ ते सूनवः स्वपसः सुदंससो मही जज्ञुर्मातरा पूर्वचित्तये।
तुश्च सत्यं जगतश्च धर्मणि पुत्रस्य पाथः पदमद्वयाविनः ॥ ३ ॥ ते मायिनो
रे सुप्रचेतसो जामी सयोनी मिथुना समोकसा। नव्यंनव्यं तन्तुमा तन्वते दिवि
द्रे अन्तः कवयः सुदीतयः ॥ ४ ॥ तद्राधो अद्य सवितुर्वरेण्यं वयं देवस्य प्र-
मना महे। अस्मभ्यं द्यावापृथिवी सुचेतुना रयिं धत्तं वसुमन्तं शतग्विनम्
५ ॥ २ ॥

॥ १६० ॥ १–५ दीर्घतमा ऋषिः ॥ द्यावापृथिव्यौ देवते ॥ छन्दः–१ वि-
जगती। २, ३, ४, ५ निचृज्जगती ॥ निषादः स्वरः ॥

॥ १६० ॥ ते हि द्यावापृथिवी विश्वशम्भुव ऋतावरी रजसो धारयत
सुजन्मनी धिषणे अन्तरीयते देवो देवी धर्मणा सूर्यः शुचिः ॥ १ ॥ उरुव्य
महिनी असश्चता पिता माता च भुवनानि रक्षतः । सुधृष्टमे वपुष्ये न रो
पिता यत्सीमभि रूपैरवासयत् ॥ २ ॥ स वह्निः पुत्रः पित्रोः पवित्रवान्पुनाति
भुवनानि मायया । धेनुं च पृश्निं वृषभं सुरेतसं विश्वाहा शुक्रं पयो
दुक्षत ॥ ३ ॥ अयं देवानामपसामपस्तमो यो जजान रोदसी विश्वशम्
वि यो ममे रजसी सुक्रतूययाजरेभिः स्कम्भनेभिः समानृचे ॥ ४ ॥ ते नो गृ
महिनी महि श्रवः क्षत्रं द्यावापृथिवी धासथो बृहत् । येनाभि कृष्टीस्ततनाम वि
पनाय्यमोजो अस्मे समिन्वतम् ॥ ५ ॥ ३ ॥

॥ १६१ ॥ १–१४ दीर्घतमा ऋषिः ॥ ऋभवो देवता ॥ छन्दः–१
जगती । २, ५, ६, ८, १२ निचृज्जगती । ७, १० जगती च । ३ निचृ
ष्टुप् । ४, १३ भुरिक् त्रिष्टुप् । ६ स्वराट् त्रिष्टुप् । ११ त्रिष्टुप् । १४ स्वराट्प
स्वरः–१, २, ५–८, १०, १२ निषादः । ३, ४, १३, ६, ११ धैवतः
पञ्चमः ॥

॥ १६१ ॥ किमु श्रेष्ठः किं यविष्ठो न आजगन्किमीयते दूत्यं१ कद्यदू
न निन्दिम चमसं यो महाकुलोऽग्ने भ्रातर्द्रुण इद्भूतिमूदिम ॥ १ ॥ एकं
चतुरस्कृणोतन तद्वो देवा अब्रुवन्तद्व आगमम् । सौधन्वना यद्येवा करिष्यथ
देवैर्यज्ञियासो भविष्यथ ॥ २ ॥ अग्निं दूतं प्रति यदब्रवीतनाश्वः कर्त्वो रथ
कर्त्वः । धेनुः कर्त्वा युवशा कर्त्वा द्वा तानि भ्रातरनु वः कृत्व्येमसि ॥ ३
कृवांस ऋभवस्तदपृच्छत क्वेदभूद्यः स्य दूतो न आजगन् । यदावाख्यच्चमस
तुरः कृतानादित्त्वष्टा ग्नास्वन्तर्न्यानजे ॥ ४ ॥ हनामैनाँ इति त्वष्टा यदब्रवी
ये देवपानमनिन्दिषुः । अन्या नामानि कृण्वते सुते सचाँ अन्यैरेनान्कन्या३ना
स्परत् ॥ ५ ॥ ४ ॥ इन्द्रो हरी युयुजे अश्विना रथं बृहस्पतिर्विश्वरूपामुपा
ऋभुर्विभ्वा वाजो देवाँ अगच्छत स्वपसो यज्ञियं भागमैतन ॥ ६ ॥ निश्चर्मण
मरिणीत धीतिभिर्या जरन्ता युवशा ताकृणोतन । सौधन्वना अश्वादश्वम
युक्त्वा रथमुप देवाँ अयातन ॥ ७ ॥ इदमुदकं पिबतेत्यब्रवीतनेदं वा घा
मुञ्जनेजनम् । सौधन्वना यदि तन्नेव हर्यथ तृतीये घा सवने मादयाध्वै ॥
आपो भूयिष्ठा इत्येको अब्रवीदग्निर्भूयिष्ठ इत्यन्यो अब्रवीत् । वधर्यन्तीं ब

ौं अब्रवीद्धता वदन्तश्च्चमसाँ अपिंशत ॥ ९ ॥ श्रोणामेकं उदकं गामवाजति मांसमेकः पिंशति सूनयाभृतं । आ निम्रुचः शकृदेको अपाभरत्किं स्वित्पुत्रेभ्यः पितरा उपावतुः ॥१०॥५॥ उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः । गोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ॥ ११ ॥ सम्मील्य यद्भुवना पर्यसर्पत क्व स्वित्तात्या पितरा व आसतुः । अशपत यः करस्नं व आददे यः प्राब्रवीत्प्रो तस्मा अब्रवीतन ॥ १२ ॥ सुषुप्वांस ऋभवस्तदपृच्छतागोह्य क इदं नो अबूबुधत् । श्वानं बस्तो बोधयितारमब्रवीत्संवत्सर इदमद्या व्यख्यत ॥ १३ ॥ दिवा यान्ति मरुतो भूम्याग्निरयं वातो अन्तरिक्षेण याति । अद्भिर्याति वरुणः समुद्रैर्युष्माँ इच्छन्तः शवसो नपातः ॥ १४ ॥ ६ ॥

॥ १६२ ॥ १—२२ दीर्घतमा ऋषिः ॥ मित्रादयो लिङ्गोक्ता देवता ॥ छन्दः—१, २, ६, १०, १७, २० निचृत् त्रिष्टुप् । ४, ७, ८, १८ त्रिष्टुप् । ५ विराट् त्रिष्टुप् । ६, ११, २१ भुरिक् त्रिष्टुप् । १२ स्वराट् त्रिष्टुप् । १३, १४ भुरिक् पङ्क्तिः । १५, १६, २२ स्वराट् पङ्क्तिः । १६ विराट् पङ्क्तिः । ३ निचृज्जगती ॥ स्वरः—१, २, ४—१२, १७, १८, २०, २१ धैवतः। १३—१६, १६, २२ पञ्चमः । ३ निषादः ॥

॥ १६२ ॥ मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् । यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ॥ १ ॥ यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति । सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः ॥ २ ॥ एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः । अभिप्रियं यत्पुरोळाशमर्वता त्वष्टेदेनं सौश्रवसाय जिन्वति ॥ ३ ॥ यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति । अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥ ४ ॥ होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शंस्ता सुविप्रः । तेन यज्ञेन स्वरङ्कृतेन स्विष्टेन वक्षणा आ पृणध्वम् ॥ ५ ॥ ॥ यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति । ये चार्वते पचनं सम्भरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥ ६ ॥ उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः । अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥ ७ ॥ यद्वाजिनो दाम सन्दानमर्वतो या शीर्षण्या रशना रज्जुरस्य । यद्वा घास्य प्रभृतमास्ये तृणं सर्वा ता ते अपि देवेष्वस्तु ॥ ८ ॥ यदश्वस्य क्रविषो

मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति । यद्धस्तयोः शमितुर्यन्नखेषु सर्वा
ते अपि देवेष्वस्तु ॥ ६ ॥ यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्
अस्ति । सुकृता तच्छमितारः कृण्वन्तूत मेधं शृतपाकं पचन्तु ॥ १० ॥ ८ ॥ य
गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति । मा तद्भूम्यामा श्रिषन्
तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥ ११ ॥ ये वाजिनं परिपश्यन्ति पक्वं य
माहुः सुरभिर्निर्हरेति । ये चार्वतो मांसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्व
॥ १२ ॥ यन्नीक्षणं मांस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि । उ
ष्मण्यापिधाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम् ॥ १३ ॥ निक्रमणं नि
दनं विवर्तनं यच्च पड्बीशमर्वतः । यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि दे
ष्वस्तु ॥ १४ ॥ मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः
इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्यश्वम् ॥ १५ ॥ ६ ॥ यद
श्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै । सन्दानमर्वन्तं पड्बीशं प्रि
देवेष्वा यामयन्ति ॥ १६ ॥ यत्ते सादे महसा शूकृतस्य पार्ष्ण्या वा कशया
तुतोद । स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि ॥ १७ ॥
तुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रिरश्वस्य स्वधितिः समेति । अच्छिद्रा गात्रा व
ना कृणोत परुष्परुरनुघुष्या वि शस्त ॥ १८ ॥ एकस्त्वष्टुरश्वस्या विशस्ता
यन्तारा भवतस्तथ ऋतुः । या ते गात्राणामृतुथा कृणोमि ताता पिण्डानां
जुहोम्यग्नौ ॥ १९ ॥ मा त्वा तपत्प्रिय आत्माप्रियन्तं मा स्वधितिस्तन्व आ
ष्ठिपत्ते । मा ते गृध्नुरविशस्तातिहाय छिद्रा गात्राण्यसिना मिथू कः ॥ २०
न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः । हरी ते युञ्
पृषती अभूतामुपास्थाद्वाजी धुरि रासभस्य ॥ २१ ॥ सुगव्यं नो वाजी स्वश्
पुंसः पुत्राँ उत विश्वापुषं रयिम् । अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो
श्वो वनतां हविष्मान् ॥ २२ ॥ १० ॥

॥ १६३ ॥ १—१३ दीर्घतमा ऋषिः ॥ अश्वोऽग्निर्देवता ॥ छन्दः—१,६,७,
त्रिष्टुप् । २ भुरिक् त्रिष्टुप् । ३, ८ विराट् त्रिष्टुप् । ५,६,११ निचृत् त्रिष्टुप् ।
१०,१२ भुरिक् पङ्क्तिः ॥ स्वरः—१—३,५—६,११,१३ धैवतः । ४,१०,१२ पञ्चम

॥ १६३ ॥ यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य
क्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥ १ ॥ यमेन दत्तं त्रित ए

युनगिन्द्र एणं प्रथमो अध्यतिष्ठत् । गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वस-
निरतष्ट ॥ २ ॥ असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन । अ-
सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥३॥ त्रीणि त आहुर्दिवि
न्धनानि त्रीण्यप्सु त्रीण्यंतः समुद्रे । उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं
नित्रम् ॥ ४ ॥ इमा ते वाजिन्नवमार्जनानीमा शफानां सनितुर्निधाना । अत्रा
भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः ॥ ५ ॥ ११ ॥ आत्मानं ते
नसारादजानामवो दिवा पतयन्तं पतङ्गम् । शिरो अपश्यं पथिभिः सुगेभिर-
णुभिर्जेहमानं पतत्रि ॥ ६ ॥ अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे
ोः । यदा ते मर्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः ॥ ७ ॥ अनु त्वा
थो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् । अनु व्रातासस्तव सख्यमीयुर-
देवा ममिरे वीर्यं ते ॥ ८ ॥ हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इ-
द्र आसीत् । देवा इदस्य हविरद्यमायन्यो अर्वन्तं प्रथमो अध्यतिष्ठत् ॥ ९ ॥ ई-
र्मान्तासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः । हंसा इव श्रेणिशो
तन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥ १० ॥ १२ ॥ तव शरीरं पतयिष्ण्वर्वन्तव
चित्तं वात इव ध्रजीमान् । तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरन्ति
॥ ११ ॥ उप प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः । अजः पुरो नी-
ते नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः ॥ १२ ॥ उप प्रागात्परमं यत्सधस्थ-
र्वाँ अच्छा पितरं मातरं च । अद्या देवाञ्जुष्टतमो हि गम्या अथा शास्ते दाशु-
वार्याणि ॥ १३ ॥ १३ ॥

॥ १६४ ॥ १-५२ दीर्घतमा ऋषिः ॥ देवता-१-४१ विश्वेदेवाः । ४२[१]
ाक् । ४२[२] आपः । ४३[१] शकधूमः । ४३[२] सोमः । ४४ अग्निः सूर्यो वायुश्च ।
५ वाक् । ४६, ४७ सूर्यः । ४८ संवत्सरात्मा कालः । ४९ सरस्वती । ५०
ाध्याः । ५१ सूर्यः पर्जन्यो वा अग्नयो वा । ५२ सरस्वान् सूर्यो वा ॥ छन्दः-१, ९,
७, ३५, ४०, ५० विराट् त्रिष्टुप् ३, ४, ५, ६, ७, ८, ११, १८, २६, ३१,
३, ३४, ३७, ४३, ४६, ४७, ४९, निचृत् त्रिष्टुप् । २, १०, १३, १६, १७,
९, २१, २४, २८, ३२, ५२ त्रिष्टुप् । १४, ३९, ४१, ४४, ४५ भुरिक् त्रि-
ष्टुप् १२, १५, २३ जगती । २९, ३६ निचृज्जगती । २० भुरिक् पङ्क्तिः । २२,
५, ४८ स्वराट् पङ्क्तिः । ३०, ३८ पङ्क्तिः । ४२ भुरिक् बृहती । ५१ विराड-

नुष्टुप् ॥ स्वरः—१—११, १३, १४, १६—१६, २१, २४, २६—२८, ३१—३
३७, ३६—४१, ४३—४७, ४६, ५०, ५२ धैवतः । १२, १५, २३, २६,
निषादः । २०, २२, २५, ४८, ३०, ३८ पञ्चमः । ४२, ५१ गान्धारः ॥

॥ १६४ ॥ अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ १ ॥ सप्त युञ्ज
रथमेकचक्रमेको अश्वो वहति सप्तनामा । त्रिनाभि चक्रमजरमनर्वं यत्रेमा
श्वा भुवनाधि तस्थुः ॥ २ ॥ इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्य
श्वाः । सप्त स्वसारो अभि सं नवन्ते यत्र गवां निहिता सप्त नाम ॥ ३ ॥ को दद
प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति । भूम्या असुरसृगात्मा क्व स्वित्
विद्वांसमुप गात्प्रष्टुमेतत् ॥ ४ ॥ पाकः पृच्छामि मनसाविजानन्देवानामेना निहि
पदानि । वत्से बष्कयेऽधि सप्त तन्तून्वि तत्निरे कवय ओतवा उ ॥ ५ ॥ १४
अचिकित्वाञ्चिकितुषश्चिदत्र कवीन्पृच्छामि विद्मने न विद्वान् । वि यस्तस्तम्
षळिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥ ६ ॥ इह ब्रवीतु य ईमङ्ग वेदा
वामस्य निहितं पदं वेः । शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उद
पदापुः ॥ ७ ॥ माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे । सा बी
त्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥ ८ ॥ युक्ता मातासीद्धुरि द
णाया अतिष्ठद्गर्भो वृजनीष्वन्तः । अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु
जनेषु ॥ ९ ॥ तिस्रो मातॄस्त्रीन्पितॄन्बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति ।
न्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम् ॥ १० ॥ १५ ॥ द्वा
शारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य । आ पुत्रा अग्ने मिथुनासो अत्र स
शतानि विंशतिश्च तस्थुः ॥ ११ ॥ पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः
अर्धे पुरीषिणम् । अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम् ॥१
पञ्चारे चक्रे परिवर्तमाने तस्मिन्ना तस्थुर्भुवनानि विश्वा । तस्य नाक्षस्तप्यते
रिभारः सनादेव न शीर्यते सनाभिः ॥ १३ ॥ सनेमि चक्रमजरं वि वावृत उत्त
नायां दश युक्ता वहन्ति । सूर्यस्य चक्षू रजसैत्यावृतं तस्मिन्नार्पिता भुवनानि वि
॥ १४ ॥ साकञ्जानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति । तेषा
ष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥ १५ ॥ १६ ॥ स्त्रि
सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः । कविर्यः पुत्रः स ई
चिकेत यस्ता विजानात्स पितुष्पितासत् ॥१६ ॥ अवः परेण पर एनावरेण प

सं बिभ्रती गौरुदस्थात् । सा कद्रीची कं स्विदर्धं परागात्क्व स्वित्सूते नहि यूथे
न्तः ॥ १७ ॥ अवः परेण पितरं यो अस्यानुवेद पर एनावरेण । कवीयमानः
इह प्र वोचद्देवं मनः कुतो अधि प्रजातम् ॥ १८ ॥ ये अर्वाञ्चस्ताँ उ पराच
हुर्ये पराञ्चस्ताँ उ अर्वाच आहुः । इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता
सो वहन्ति ॥ १९ ॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते ।
योरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥ २० ॥ १७ ॥ यत्रा सु-
र्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति । इनो विश्वस्य भुवनस्य गोपाः स
धीरः पाकमत्रा विवेश ॥ २१ ॥ यस्मिन्वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते
धि विश्वे । तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद ॥२२॥ यद्गा-
त्रे अधि गायत्रमाहितं त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत । यद्वा जगज्जगत्याहितं पदं य
तद्विदुस्ते अमृतत्वमानशुः ॥२३॥ गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वा-
म् । वाकेन वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्त वाणीः ॥२४॥ जगता सिन्धुं दि-
स्तभायद्रथन्तरे सूर्यं पर्यपश्यत् । गायत्रस्य समिधस्तिस्र आहुस्ततो मह्ना प्र रिरिचे
हित्वा ॥ २५ ॥१८ ॥ उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
ष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचम् ॥ २६ ॥ हिङ्कृण्वती
सुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् । दुहामश्विभ्यां पयो अघ्न्येयं सा वर्ध-
महते सौभगाय ॥२७॥ गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ । सृ-
णं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥२८॥ अयं स शिङ्क्ते येन गौर-
वृता मिमाति मायुं ध्वसनावधि श्रिता । सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती
ते वव्रिमौहत ॥२९॥ अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानाम् । जीवो मृ-
यं चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥ ३० ॥ १९ ॥ अपश्यं गोपाम-
पद्यमानमा च परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आ व-
र्वर्ति भुवनेष्वन्तः ॥ ३१ ॥ य ईं चकार न सो अस्य वेद य ईं ददर्श हिरु-
न्नु तस्मात् । स मातुर्योना परिवीतो अन्तर्बहुप्रजा निरृतिमा विवेश ॥ ३२ ॥
र्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् । उत्तानयोश्चम्वो३र्यो-
रन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥ ३३ ॥ पृच्छामि त्वा परमन्तं पृथिव्याः पृ-
मि यत्र भुवनस्य नाभिः । पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः
मं व्योम ॥ ३४ ॥ इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः ।
यं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥ ३५ ॥ २० ॥

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि । ते धीतिभिर्मन
ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥ ३६ ॥ न वि जानामि यदिवे
मस्मि निण्यः सन्नद्धो मनसा चरामि । यदा मागन्प्रथमजा ऋतस्यादिद्वाचो
श्नुवे भागमस्याः ॥ ३७ ॥ अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना स
निः । ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यम् ॥ ३८
ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद कि
करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ३९ ॥ सूयवसाद्भगवती हि भूया अ
वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचर
॥ ४० ॥ २१ ॥ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पद
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ ४१ ॥ तस्याः समुद्रा अधि
क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः[1] । ततः क्षरत्यक्षरं तद्विश्वमुप जीवति[2] ॥४
शकमयं धूममारादपश्यं विषूवता पर एनावरेण[1] । उक्षाणं पृश्निमपचन्त वी
स्तानि धर्माणि प्रथमान्यासन्[2] ॥ ४३ ॥ त्रयः केशिन ऋतुथा वि चक्षते स
त्सरे वपत एक एषाम् । विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न
पम् ॥ ४४ ॥ चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिण
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ ४५ ॥ इन्द्रं
त्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्
ग्निं यमं मातरिश्वानमाहुः ॥ ४६ ॥ २२ ॥ कृष्णं नियानं हरयः सुपर्णा अ
वसाना दिवमुत्पतन्ति । त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ॥४
द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत । तस्मिन्त्साकं त्रिशता
शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥ ४८ ॥ यस्ते स्तनः शशयो यो मयो
न विश्वा पुष्यसि वार्याणि । यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह
तवे कः ॥ ४९ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते
नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ ५० ॥ समानमेत
कमुच्चैत्यव चाहभिः । भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥ ५१
दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम् । अभीपतो वृष्टिभिस्त
न्तं सरस्वन्तमवसे जोहवीमि ॥ ५२ ॥ २३ ॥ २२ ॥

॥ १६५ ॥ १-१५ अगस्त्य ऋषिः ॥ इन्द्रो देवता ॥ छन्दः-१, ३,

११, १२, विराट् त्रिष्टुप् । २, ८, ६ त्रिष्टुप् । १३ निचृत् त्रिष्टुप् ६, ७,
, १४, भुरिक् पङ्क्तिः । १५ पङ्क्तिः ॥ स्वरः–१–५, ८, ६, ११–१३
तः । ६, ७, १०, १४, १५ पञ्चमः ॥

॥ १६५ ॥कया शुभा सर्वयसः सनीलाः समान्या मरुतः सं मिमिक्षुः ।
ा मती कुत एतास एतेऽर्चन्ति शुष्मं वृषणो वसूया ॥ १ ॥ कस्य ब्रह्माणि
षुर्युवानः को अध्वरे मरुत आ ववर्त । श्येनाँ इव ध्रजतो अन्तरिक्षे केन महा
सा रीरमाम ॥ २ ॥ कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था ।
पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे ॥ ३ ॥ ब्रह्माणि मे
यः शं सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः । आशासते प्रति हर्यन्त्युक्थेमा
वहतस्ता नो अच्छ ॥ ४ ॥ अतो वयमन्तमेभिर्युजानाः स्वक्षत्रेभिस्तन्वः१ शु-
मानाः । महोभिरेताँ उप युज्महे न्विन्द्र स्वधामनु हि नो बभूथ ॥ ५ ॥ २४ ॥
स्यावो मरुतः स्वधासीद्यन्मामेकं समधत्ताहिहत्ये । अहं ह्यु१ग्रस्तविषस्तुविष्मा-
श्वस्य शत्रोरनमं वधस्नैः ॥ ६ ॥ भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ
स्येभिः । भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥ ७ ॥ वधीं
मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान् । अहमेता मनवे विश्वश्चन्द्राः
ा अपश्चकर वज्रबाहुः ॥ ८ ॥अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता
दानः । न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥ ६ ॥
स्य चिन्मे विभ्व१स्त्वोजो या नु दधृष्वान्कृणवै मनीषा । अहं ह्यु१ग्रो मरुतो
दानो यानि च्यवमिन्द्र इदीश एषाम् ॥ १० ॥ २५ ॥ अमन्दन्मा मरुतः स्तोमो
यन्मे नरः श्रुत्यं ब्रह्म चक्र । इन्द्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे
भिः ॥ ११ ॥ एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः । सञ्च-
ा मरुतश्चन्द्रवर्णा अच्छान्त मे छदयाथा च नूनम् ॥ १२॥ को न्वत्र मरुतो
महे वः प्र यातन सखीँरच्छा सखायः । मन्मानि चित्रा अपिवातयन्त एषां भूत
दा प्र ऋतानाम् ॥ १३ ॥ आ यद्दुवस्याद्दुवसे न कारुरस्माञ्चक्रे मान्यस्य
ा । ओ षु वर्त्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत् ॥ १४॥ एष
स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः । एषा यासीष्ट तन्वे वयां
द्यामेषं वृजनं जीरदानुम् ॥ १५ ॥ २६ ॥ ३॥

॥ १६६ ॥ १–१५ ॥ मैत्रावरुणोऽगस्त्य ऋषिः ॥ मरुतो देवता ॥ छन्दः–

१, २, ८ जगती । ३, ५, ६, १२, १३ निचृज्जगती । ४ विराड् जगत
७, ९, १० भुरिक् त्रिष्टुप् । ११ विराट् त्रिष्टुप् । १४ त्रिष्टुप् । १५ पङ्क्तिः
स्वरः–१–६, ८, १२, १३ निषादः । ७, ९–११, १४ धैवतः । १५ पञ्चम

॥ १६६ ॥ तन्नु वोचाम रभसाय जन्मने पूर्वं महित्वं वृषभस्य केतवे । ऐ
धेव यामन्मरुतस्तुविष्वणो युधेव शक्रास्तविषाणि कर्तन ॥ १ ॥ नित्यं न सूनुं
बिभ्रत उप क्रीळन्ति क्रीळा विदथेषु घृष्वयः । नक्षन्ति रुद्रा अवसा नमस्विन
मर्धन्ति स्वतवसो हविष्कृतम् ॥ २ ॥ यस्मा ऊमासो अमृता अरासत रायस
च हविषा ददाशुषे । उक्षन्त्यस्मै मरुतो हिता इव पुरू रजांसि पयसा मयो
॥ ३ ॥ आ ये रजांसि तविषीभिरव्यत प्र व एवासः स्वयतासो अध्रजन् ।
न्ते विश्वा भुवनानि हर्म्या चित्रो वो यामः प्रयतास्वृष्टिषु ॥ ४ ॥ यत्त्वेषय
नदयन्त पर्वतान्दिवो वा पृष्ठं नर्या अचुच्यवुः । विश्वो वो अज्मन्भयते वन
तीं रथीयन्तीव प्र जिहीत ओषधिः ॥ ५ ॥ १ ॥ यूयं न उग्रा मरुतः सुचेतुन
ष्टग्रामाः सुमतिं पिपर्तन । यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधि
बर्हणा ॥६ ॥प्र स्कम्भदेष्णा अनवभ्रराधसोऽलातृणासो विदथेषु सुष्टुत
अर्चन्त्यर्कं मदिरस्य पीतये विदुर्वीरस्य प्रथमानि पौंस्या ॥ ७ ॥ शतभु
भिस्तमभिह्रुतेरघात्पूर्भी रक्षता मरुतो यमावत । जनं यमुग्रास्तवसो विरप्शि
पाथना शंसात्तनयस्य पुष्टिषु ॥ ८ ॥ विश्वानि भद्रा मरुतो रथेषु वो मिथस्पृ
तविषाण्याहिता । अंसेष्वा वः प्रपथेषु खादयोऽक्षो वश्चक्रा समया वि व
॥ ९ ॥ भूरीणि भद्रा नर्येषु बाहुषु वक्षःसु रुक्मा रभसासो अञ्जयः । अंसेष्वे
पविषु क्षुरा अधि वयो न पक्षान्व्यनु श्रियो धिरे ॥ १० ॥ २ ॥ महान्तो
विभ्वो विभूतयो दूरेदृशो ये दिव्या इव स्तृभिः । मन्द्राः सुजिह्वाः स्वरितार
सभिः संमिश्ला इन्द्रे मरुतः परिष्टुभः ॥ ११ ॥ तद्वः सुजाता मरुतो महित
दीर्घं वो दात्रमदितेरिव व्रतम् । इन्द्रश्चन त्यजसा वि ह्रुणाति तज्जनाय
सुकृते अराध्वम् ॥ १२ ॥ तद्वो जामित्वं मरुतः परे युगे पुरू यच्छंसममृतास
वत आया धिया मनवे श्रुष्टिमाव्या साकं नरो दंसनैरा चिकित्रिरे ॥ १३ ॥
दीर्घं मरुतः शूशवाम युष्माकेन परीणसा तुरासः । आ यत्ततनन्वृजने जनास
भिर्यज्ञेभिस्तदभीष्टिमश्याम् ॥ १४ ॥ एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य
न्यस्य कारोः । एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ १५ ॥

॥ १६७ ॥ १–११ अगस्त्य ऋषिः ॥ इन्द्रो मरुच्च देवता ॥ छन्दः–१, ४,
भुरिक् पङ्क्तिः । ७, ६ स्वराट् पङ्क्तिः । १० निचृत् पङ्क्तिः । ११ पङ्क्तिः । २, ३, ६,
निचृत् त्रिष्टुप् ॥ स्वरः–१, ४, ५, ७, ६–११ पञ्चमः । २, ३, ६, ८ धैवतः ॥

॥ १६७ ॥ सहस्रं त इन्द्रोतयो नः सहस्रमिषो हरिवो गूर्ततमाः । सहस्रं
रायो मादयध्यै सहस्रिण उप नो यन्तु वाजाः ॥ १ ॥ आ नोऽवोभिर्मरुतो या-
न्त्वच्छा ज्येष्ठेभिर्वा बृहद्दिवैः सुमायाः । अध यदेषां नियुतः परमाः समुद्रस्य चि-
द्धनयन्त पारे ॥ २ ॥ मिम्यक्ष येषु सुधिता घृताची हिरण्यनिर्णिगुपरा न ऋष्टिः ।
गुहा चरन्ती मनुषो न योषा सभावती विदथ्येव सं वाक् ॥ ३ ॥ परा शुभ्रा अ-
यासो यव्या साधारण्येव मरुतो मिमिक्षुः । न रोदसी अप नुदन्त घोरा जुषन्त
वृधं सख्याय देवाः ॥ ४ ॥ जोषद्यदीमसुर्या सचध्यै विषितस्तुका रोदसी नृमणाः ।
आ सूर्येव विधतो रथं गात्त्वेषप्रतीका नभसो नेत्या ॥ ५ ॥ ४ ॥ आस्थापय-
न्त युवतिं युवानः शुभे निमिश्लां विदथेषु पज्राम् । अर्को यद्वो मरुतो हविष्मा-
न्गायद्गाथं सुतसोमो दुवस्यन् ॥ ६ ॥ प्र तं विविक्मि वक्म्यो य एषां मरुतां महि-
मा सत्यो अस्ति । सचा यदीं वृषमणा अहंयुः स्थिरा चिज्जनीर्वहते सुभागाः ॥७॥
पान्ति मित्रावरुणाववद्याच्चयत ईमर्यमो अप्रशस्तान् । उत च्यवन्ते अच्युता ध्रुवा-
णि वावृध ईं मरुतो दातिवारः ॥ ८ ॥ नही नु वो मरुतो अन्त्यस्मे आरात्ताच्चि-
च्छवसो अन्तमापुः । ते धृष्णुना शवसा शूशुवांसोऽर्णो न द्वेषो धृषता परि ष्ठुः
॥ ६ ॥ वयमद्येन्द्रस्य प्रेष्ठा वयं श्वो वोचेमहि समर्ये । वयं पुरा महि च नो अनु
द्यून् तन्न ऋभुक्षा नरामनु ष्यात् ॥१०॥ एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य
मान्यस्य कारोः । एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥११॥५॥

॥ १६८ ॥ १–१० अगस्त्य ऋषिः ॥ मरुतो देवता ॥ छन्दः–१, ४ निचृज्ज-
गती । २, ५ विराट् त्रिष्टुप् । ३ स्वराट् त्रिष्टुप् । ६, ७ भुरिक् त्रिष्टुप् । ८ त्रि-
ष्टुप् । ६ निचृत् त्रिष्टुप् । १० पङ्क्तिः ॥ स्वरः–१, ४ निषादः । २, ३, ५–६ धैवतः ।
१० पञ्चमः ॥

॥ १६८ ॥ यज्ञायज्ञा वः समना तुतुर्वणिर्धियंधियं वो देवया उ दधिध्वे ।
आ वोऽर्वाचः सुविताय रोदस्योर्महे ववृत्यामवसे सुवृक्तिभिः ॥ १ ॥ वव्रासो न
ये स्वजाः स्वतवस इषं स्वरभिजायन्त धूतयः । सहस्रियासो अपां नोर्मय आसा
गावो वन्द्यासो नोक्षणः ॥ २ ॥ सोमासो न ये सुतास्तृप्तांशवो हृत्सु पीतासो

दुवसो नासंते। ऐषामंसेषु रम्भिणींव रारभे हस्तेषु खादिश्च कृतिश्च सं दधे॥ ३
अव स्वयुक्ता दिव आ वृथा ययुरमर्त्याः कशंया चोदत त्मनां। अरेणवस्तुविजा
अंचुच्यवुर्दृळ्हानि चिन्मरुतो भ्राजंदृष्टयः ॥ ४ ॥ को वोऽन्तर्मरुत ऋष्टिविद्यु
रेजंति त्मना हन्वेव जिह्वयां। धन्वच्युतं इषां न यामनि पुरुप्रैषा अहन्यो३ नैतं
॥ ५ ॥ ६ ॥ क्व स्विदस्य रजसो महस्परं क्वावरं मरुतो यस्मिन्नायय। यच्च्य
वयंथ विथुरेव संहितं व्यद्रिणा पतथ त्वेषमर्णवम् ॥ ६ ॥ सातिर्न वोऽमंवती स
र्वंती त्वेषा विपाका मरुतः पिपिष्वती। भद्रा वो रातिः पृणतो न दक्षिणा पृ
अयी असुर्येव जञ्जती ॥ ७ ॥ प्रति ष्टोभन्ति सिन्धवः पविभ्यो यदभ्रियां वा
चमुदीरयन्ति। अवं स्मयन्त विद्युतः पृथिव्यां यदी घृतं मरुतः प्रुष्णुवन्ति ॥ ८
असूत पृश्निर्महते रणाय त्वेषमयासां मरुतामनीकम्। ते सप्सरासोऽजनयन्ताभ्व
मादित्स्वधामिषिरां पर्यपश्यन् ॥ ९ ॥ एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य
मान्यस्य कारोः। एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ १० ॥ ७

॥ १६९ ॥ १—८ अगस्त्य ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१, ३
रिक् पङ्क्तिः। २ पङ्क्तिः। ५, ६ स्वराट् पङ्क्तिः। ४ ब्राह्म्युष्णिक्। ७, ८ नि
त्रिष्टुप् ॥ स्वरः—१–३, ५, ६ पञ्चमः। ४ ऋषभः। ७, ८ धैवतः ॥

॥ १६९ ॥ महश्चित्त्वमिन्द्र यत एतान्महश्चिदसि त्यजसो वरूता। स
वेधो मरुतां चिकित्वान्त्सुम्ना वनुष्व तव हि प्रेष्ठा ॥ १ ॥ अयुंजन्त इन्द्र वि
कृष्टीर्विदानासो निष्षिधो मर्त्यत्रा। मरुतां पृत्सुतिर्हासमाना स्वर्मीळ्हस्य प्रध
स्य सातौ ॥ २ ॥ अम्यक्सा त इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति।
ग्निश्चिद्धि ष्मातसे शुशुकानापो न द्वीपं दधति प्रयांसि ॥ ३ ॥ त्वं तू न इ
तं रयिं दा ओजिष्ठया दक्षिणयेव रातिम्। स्तुतश्च यास्ते चकनन्त वायोः स्त
न मध्वः पीपयन्त वाजैः ॥ ४ ॥ त्वे राय इन्द्र तोशतमाः प्रणेतारः कस्य चि
तायोः। ते षु णो मरुतो मृळयन्तु ये स्मा पुरा गातूयन्तीव देवाः ॥ ५ ॥ ८ ॥ प्र
प्र याहीन्द्र मीळ्हुषो नॄन्महः पार्थिवे सदने यतस्व। अध यदेषां पृथुबुध्नास एत
स्तीर्थे नार्यः पौंस्यानि तस्थुः ॥ ६ ॥ प्रति घोराणामेतानामयासां मरुतां शृण्व
आयतामुपब्दिः। ये मर्त्यं पृतनायन्तमूमैर्ऋणावानं न पतयन्त सर्गैः ॥ ७ ॥
मानेभ्य इन्द्र विश्वजन्या रदा मरुद्भिः शुरुधो गोअग्राः। स्तवानेभिः स्तवसे दे
देवैर्विद्यामेषं वृजनम् जीरदानुम् ॥ ८ ॥ ९ ॥

॥ १७० ॥ १—५ अगस्त्य ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१ स्वराड-
ष्टुप् । २ अनुष्टुप् । ३ विराडनुष्टुप् । ४ निचृदनुष्टुप् । ५ भुरिक् पङ्क्तिः ॥
वरः—१-४ गान्धारः । ५ पञ्चमः ॥

॥ १७० ॥ न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् । अन्यस्य चित्तमभि संञ्चरे-
ण्यमुताधीतं वि नश्यति ॥ १ ॥ किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव । तेभिः
कल्पस्व साधुया मा नः समरणे वधीः ॥ २ ॥ किं नो भ्रातरगस्त्य सखा सन्न-
ति मन्यसे । विद्मा हि ते यथा मनोऽस्मभ्यमिन्न दित्ससि ॥ ३ ॥ अरं कृण्वन्तु
वेदिं समग्निमिन्धतां पुरः । तत्रामृतस्य चेतनं यज्ञं ते तनवावहै ॥ ४ ॥ त्वमी-
शिषे वसुपते वसूनां त्वं मित्राणां मित्रपते धेष्ठः । इन्द्र त्वं मरुद्भिः सं वदस्वाध
प्राशान ऋतुथा हवींषि ॥ ५ ॥ १० ॥

॥ १७१ ॥ १—६ अगस्त्य ऋषिः ॥ मरुतो देवता ॥ छन्दः—१, ५
निचृत् त्रिष्टुप् । २ त्रिष्टुप् । ४, ६ विराट् त्रिष्टुप् । ३ भुरिक् पङ्क्तिः ॥ स्वरः—१,
२, ४—६ धैवतः । ३ पञ्चमः ॥

॥ १७१ ॥ प्रति व एना नमसाहमेमि सूक्तेन भिक्षे सुमतिं तुराणाम् ।
रराणता मरुतो वेद्याभिर्नि हेळो धत्त वि मुचध्वमश्वान् ॥ १ ॥ एष वः स्तोमो
मरुतो नमस्वान्हृदा तष्टो मनसा धायि देवाः । उपेमा यात मनसा जुषाणा यूयं
हि ष्ठा नमस इद्वृधासः ॥ २ ॥ स्तुतासो नो मरुतो मृळयन्तूत स्तुतो मघवा शम्भ-
विष्ठः । ऊर्ध्वा नः सन्तु कोम्या वनान्यहानि विश्वा मरुतो जिगीषा ॥ ३ ॥ अ-
स्मादहं तविषादीषमाण इन्द्राद्भिया मरुतो रेजमानः । युष्मभ्यं हव्या निशिता-
न्यासन्तान्यारे चकृमा मृळता नः ॥ ४ ॥ येन मानासश्चितयन्त उस्रा व्युष्टिषु
शवसा शश्वतीनाम् । स नो मरुद्भिर्वृषभ श्रवो धा उग्र उग्रेभिः स्थविरः सहोदाः
॥ ५ ॥ त्वं पाहीन्द्र सहीयसो नॄन्भवा मरुद्भिरवयातहेळाः । सुप्रकेतेभिः सास-
हिर्दधानो विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥ ११ ॥

॥ १७२ ॥ १-३ अगस्त्य ऋषिः ॥ मरुतो देवता ॥ छन्दः—१ विराड्
गायत्री । २, ३ गायत्री ॥ षड्जः स्वरः ॥

॥ १७२ ॥ चित्रो वोऽस्तु यामश्चित्र ऊती सुदानवः । मरुतो अहिभानवः
॥ १ ॥ आरे सा वः सुदानवो मरुत ऋञ्जती शरुः । आरे अश्मा यमस्यथ ॥ २ ॥
तृणस्कन्दस्य नु विशः परि वृङ्क्त सुदानवः । ऊर्ध्वान्नः कर्त जीवसे ॥ ३ ॥ १२ ॥

॥ १७३ ॥ १-१३ अगस्त्य ऋषिः ॥ इन्द्रो देवता ॥ छन्दः-१, ५, १
पङ्क्तिः । ६, ९, १०, १२ भुरिक् पङ्क्तिः । २, ८ विराट् त्रिष्टुप् । ३ त्रिष्टुप्
७, १३ निचृत् त्रिष्टुप् । ४ बृहती ॥ स्वरः-१, ५, ११, ६, ९, १०, १२ पञ्चमः
२, ८, ३, ७, १३ धैवतः । ४ मध्यमः ॥

॥ १७३ ॥ गाय॒त्साम॑ नभ॒न्यं१॒ यथा॒ वेरर्चा॑म॒ तद्वा॑वृधा॒नं स्व॑र्वत् । गा
धे॒नवो॑ ब॒र्हिष्यद॑ब्धा॒ आ यत्स॒द्मानं॑ दि॒व्यं विवा॑सान् ॥ १ ॥ अर्च॒द्वृषा॒ वृषं॑भिः
स्वेदु॑हव्यैर्मृ॒गो नाश्नो॒ अति॒ यज्जु॑गु॒र्यात् । प्र म॑न्द॒युर्म॒नां गू॑र्त॒ होता॒ भर॑ते॒ मर्यो
मिथु॒ना यज॑त्रः ॥ २ ॥ नक्ष॒द्धोता॒ परि॒ सद्म॑ मि॒ता यन्भर॒द्गर्भ॒मा श॒रदः॑ पृथि॒व्याः
क्रन्द॒दश्वो॒ नय॑मानो रु॒वद्गौर॒न्तर्दू॒तो न रोद॑सी च॒रद्वाक् ॥ ३ ॥ ता क॒र्माष॑तर
स्मै॒ प्र च्यौ॒त्नानि॑ दे॒वय॑न्तो भरन्ते । जुजो॑ष॒दिन्द्रो॑ द॒स्मव॑र्चा॒ नास॑त्येव॒ सुग्म्यो
रथे॒ष्ठाः ॥ ४ ॥ तमु॑ ष्टु॒हीन्द्रं॒ यो ह॒ सत्वा॒ यः शूरो॑ म॒घवा॒ यो र॑थे॒ष्ठाः । प्र॒ती
च॒श्चिद्योधी॑या॒न्वृष॑ण्वान्वव॒व्रुष॑श्चि॒त्तम॑सो॒ विह॒न्ता ॥ ५ ॥ १३ ॥ प्र यदि॒त्था
म॑हि॒ना नृभ्यो॒ अस्त्यरं॒ रोद॑सी क॒क्ष्ये॒३ नास्मै॑ । सं वि॑व्य॒ इन्द्रो॑ वृ॒जनं॒ न भूमा॒ भर्ति॑
स्व॒धावाँ॑ ओप॒शमि॑व॒ द्याम् ॥ ६ ॥ स॒मत्सु॑ त्वा शूर स॒ताम॑ुरा॒णं प्र॑प॒थिन्त॑मं परि
तं॑स॒यध्यै॑ । स॒जोष॑स॒ इन्द्रं॒ मदे॑ क्षो॒णीः सू॒रिं चि॒द्ये अ॑नु॒मद॑न्ति॒ वाजैः॑ ॥ ७
ए॒वा हि ते॒ शं सव॑ना समु॒द्र आपो॒ यत्त॑ आ॒सु मद॑न्ति दे॒वीः । विश्वा॑ ते॒ अ
जोष्या॑ भूद्गौः सू॒रींश्चि॒द्यदि॑ धि॒षा वेषि॒ जना॑न् ॥ ८ ॥ असा॑म॒ यथा॑ सुष॒खा
एन॑ स्वभि॒ष्टयो॑ न॒रां न शंसैः॑ । अस॒द्यथा॑ न॒ इन्द्रो॑ वन्दने॒ष्ठास्तु॒रो न कर्म॒ नय
मान उ॒क्था ॥ ९ ॥ विष्प॑र्धसो न॒रां न शंसै॑र॒स्माका॑स॒दिन्द्रो॒ वज्र॑हस्तः । मि॒त्र
यु॒वो न पूर्प॑तिं॒ सुशि॑ष्टौ मध्या॒युव॒ उप॑ शिक्षन्ति य॒ज्ञैः ॥ १० ॥ १४ ॥ य॒ज्ञो
ष्मेन्द्रं॒ कश्चि॑द्दू॒न्धञ्जु॑हुरा॒णश्चि॒न्मन॑सा परि॒यन् । ती॒र्थे नाच्छा॑ ताततृषा॒णमोक
दी॒र्घो न सि॒ध्रमा कृ॑णो॒त्यध्वा॑ ॥ ११ ॥ मो षू ण॑ इन्द्रा॒त्र पृ॒त्सु दे॒वैरस्ति॒ हि ष्म
ते शुष्मिन्नव॒याः । म॒हश्चि॒द्यस्य॑ मी॒ळ्हुषो॑ य॒व्या ह॒विष्म॑तो म॒रुतो॒ वन्द॑ते॒ गीः ॥ १२
ए॒ष स्तोम॑ इन्द्र॒ तुभ्य॑म॒स्मे ए॒तेन॑ गा॒तुं ह॑रिवो विदो नः । आ नो॑ ववृत्याः
वि॒ताय॑ देव वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥ १३ ॥ १५ ॥

॥ १७४ ॥ १-१० अगस्त्य ऋषिः ॥ इन्द्रो देवता ॥ छन्दः-१ निचृत्
पङ्क्तिः । २, ३, ६, ८, १० भुरिक् पङ्क्तिः । ४ स्वराट् पङ्क्तिः । ५, ७, ९ पङ्क्तिः
पञ्चमः स्वरः ॥

॥ १७४ ॥ त्वं राजेन्द्र ये च देवा रक्षा नॄन्पाह्यसुर त्वमस्मान् । त्वं सत्प-
मघवा नस्तरुत्रस्त्वं सत्यो वसवानः सहोदाः ॥ १ ॥ दनो विश इन्द्र मृध्रवाचः
यत्पुरः शर्म शारदीं दर्त् । ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय र-
ः ॥ २ ॥ अजा वृत इन्द्र शूरपत्नीर्द्यां च येभिः पुरुहूत नूनम् । रक्षो अग्नि-
षं तूर्वयाणं सिंहो न दमे अपांसि वस्तोः॥ ३ ॥ शेषन्नु त इन्द्र सस्मिन्योनौ
स्तये पवीरवस्य मह्ना । सृजदर्णांस्यव यद्युधा गास्तिष्ठद्धरी धृषता मृष्ट वाजान्
४ ॥ वह कुत्समिन्द्र यस्मिञ्चाकन्त्स्यूमन्यू ऋज्रा वातस्याश्वा । प्र सूरश्चक्रं
तादभीकेऽभि स्पृधो यासिषद्वज्रबाहुः॥ ५ ॥ १६ ॥ जघन्वाँ इन्द्र मित्रेरूञ्चो-
वृद्धो हरिवो अदाशून् । प्र ये पश्यन्नर्यमणं सचायोस्त्वया शूर्ता वहमाना
त्यम् ॥ ६ ॥ रपत्कविरिन्द्रार्कसातौ क्षां दासायोपबर्हणीं कः । करत्तिस्रो म-
दानुचित्रा नि दुर्योणे कुयवाचं मृधि श्रेत् ॥ ७ ॥ सना ता त इन्द्र नव्या
ुः सहो नभोऽविरणायपूर्वीः । भिनत्पुरो न भिदो अदेवीर्ननमो वधरदेवस्य
ोः ॥ ८ ॥ त्वं धुनिरिन्द्र धुनिमतीर्ऋणोरपः सीरा न स्रवन्तीः । प्र यत्समु-
ति शूर पर्षि पारया तुर्वशं यदुं स्वस्ति ॥ ९ ॥ त्वमस्माकमिन्द्र विश्वध स्या
कतमो नरां नृपाता । स नो विश्वासां स्पृधां सहोदा विद्यामेषं वृजनं जीर-
ुम् ॥ १० ॥ १७ ॥

॥ १७५ ॥ १–६ अगस्त्य ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१ स्वराडनुष्टुप् ।
विराडनुष्टुप् । ५ अनुष्टुप् । ३ निचृत् त्रिष्टुप् । ६ भुरिक् त्रिष्टुप् । ४ उष्णि-
॥ स्वरः–१, २, ५ गान्धारः । ३, ६ धैवतः । ४ ऋषभः ॥

॥ १७५ ॥ मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः । वृषा ते वृ-
इन्दुर्वाजी सहस्रसातमः ॥ १ ॥ आ नस्ते गन्तु मत्सरो वृषा मदो वरेण्यः ।
वाँ इन्द्र सानसिः पृतनाषाळमर्त्यः ॥ २ ॥ त्वं हि शूरः सनिता चोदयो मनुषो
म् । सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ॥ ३ ॥ मुषाय सूर्यं कवे चक्र-
ान ओजसा । वह शुष्णाय वधं कुत्सं वातस्याश्वैः ॥ ४ ॥ शुष्मिन्तमो हि
दो द्युम्निन्तम उत क्रतुः । वृत्रघ्ना वरिवोविदा मंसीष्ठा अश्वसातमः ॥ ५ ॥
पूर्वेभ्यो जरितृभ्य इन्द्र मयइवापो न तृष्यते बभूथ । तामनु त्वा निविदं
हवीमि विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥ १८ ॥

॥ १७६ ॥ १–६ अगस्त्य ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, ४ अनुष्टुप्

२ निचृदनुष्टुप् ३। विराडनुष्टुप्। ५ भुरिगुष्णिक्। ६ भुरिक् त्रिष्टुप्॥ स्व
१-४ गान्धारः। ५ ऋषभः। ६ धैवतः॥

॥ १७६ ॥ मत्सि नो वस्यइष्टय इन्द्रमिन्दो वृषा विश। ऋघायमाण इन्व
शत्रुमन्ति न विन्दसि ॥ १ ॥ तस्मिन्ना वेशया गिरो य एकश्चर्षणीनाम्।
नुस्वधा यमुप्यते यवं न चर्कृषद्वृषा ॥ २ ॥ यस्य विश्वानि हस्तयोः पञ्च क्षिती
वसु। स्पाशयस्व यो अस्मध्रुग्दिव्येवाशनिर्जहि ॥ ३ ॥ असुन्वन्तं समं जहि
णाशं यो न ते मयः। अस्मभ्यमस्य वेदनं दद्धि सूरिश्चिदोहते ॥ ४ ॥ अ
यस्य द्विबर्हसोऽर्केषु सानुषगसत्। आजाविन्द्रस्येन्दो प्रावो वाजेषु वाजिनम्।
॥ यथा पूर्वेभ्यो जरितृभ्य इन्द्र मयइवापो न तृष्यते बभूथ। तामनु त्वा नि
जोहवीमि विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥ १९ ॥

॥ १७७ ॥ १-५ अगस्त्य ऋषिः ॥ इन्द्रो देवता ॥ छन्दः-१, २ नि
त्रिष्टुप्। ३ त्रिष्टुप्। ४ भुरिक् त्रिष्टुप्। ५ भुरिक् पङ्क्तिः ॥ स्वरः- १-४ धै
तः। ५ पञ्चमः ॥

॥ १७७ ॥ आ चर्षणिप्रा वृषभो जनानां राजा कृष्टीनां पुरुहूत इन्द्र
स्तुतः श्रवस्यन्नवसोप मद्रिग्युक्त्वा हरी वृषणा याह्यर्वाङ् ॥ १ ॥ ये ते वृष
वृषभास इन्द्र ब्रह्मयुजो वृषरथासो अत्याः। ताँ आ तिष्ठ तेभिरा याह्यर्वाङ् ह
महे त्वा सुत इन्द्र सोमे ॥ २ ॥ आ तिष्ठ रथं वृषणं वृषा ते सुतः सोमः परि
क्ता मधूनि। युक्त्वा वृषभ्यां वृषभ क्षितीनां हरिभ्यां याहि प्रवतोप मद्रिक् ॥
अयं यज्ञो देवया अयं मियेध इमा ब्रह्माण्ययमिन्द्र सोमः। स्तीर्णं बर्हिरा तु
क्र प्र याहि पिबा निषद्य वि मुचा हरी इह ॥ ४ ॥ ओ सुष्टुत इन्द्र याह्यर्वा
ब्रह्माणि मान्यस्य कारोः। विद्याम वस्तोरवसा गृणन्तो विद्यामेषं वृजनं जी
दानुम् ॥ ५ ॥ २० ॥

॥ १७८ ॥ १—५ अगस्त्य ऋषिः ॥ इन्द्रो देवता ॥ छन्दः-१, २ भु
क् पङ्क्तिः। ३, ४ निचृत् त्रिष्टुप्। ५ विराट् त्रिष्टुप् ॥ स्वरः- १, २ पञ्चमः
३, ४, ५ धैवतः ॥

॥ १७८ ॥ यद्ध स्या त इन्द्र श्रुष्टिरस्ति यया बभूथ जरितृभ्य ऊती।
नः कामं महयन्तमा धग्विश्वा ते अश्यां पर्याप आयोः ॥ १ ॥ न घा राजेन्द्र

न्त्रो या नु स्वसारा कृणवन्त योनौ। आपश्चिदस्मै सुतुका अवेषन्गमन्न इन्द्रः
ऱ्या वयश्च ॥ २ ॥ जेता नृभिरिन्द्रः पृत्सु शूरः श्रोता हवं नाधमानस्य कारोः।
र्ता रथं दाशुष उपाक उद्यन्ता गिरो यदि च त्मना भूत् ॥ ३ ॥ एवा नृभि-
न्द्रः सुश्रवस्या प्रखादः पृक्षो अभि मित्रिणो भूत्। समर्य इषः स्तवते विवाचि
ाकरो यजमानस्य शंसः॥ ४ ॥ त्वया वयं मघवन्निन्द्र शत्रूनभि ष्याम महतो
यमानान्। त्वं त्राता त्वमु नो वृधे भूर्विद्यामेषं वृजनं जीरदानुम् ॥ ५ ॥ २१॥

॥ १७६ ॥ १–६ लोपामुद्राऽगस्त्यौ ऋषिः॥ दम्पती देवता॥ छन्दः–१, ४
ष्टुप्। २, ३ निचृत् त्रिष्टुप्। ६ विराट् त्रिष्टुप्। ५ निचृद्बृहती॥ स्वरः–१–४, ६
तः। ५ मध्यमः॥

॥ १७६ ॥ पूर्वीरहं शरदः शश्रमाणा दोषा वस्तोरुषसो जरयन्तीः। मिनाति
यं जरिमा तनूनामप्यू नु पत्नीर्वृषणो जगम्युः ॥ १ ॥ ये चिद्धि पूर्व ऋतसाप
सन्त्साकं देवेभिरवदन्नृतानि। ते चिदवासुर्नह्यन्तमापुः समू नु पत्नीर्वृषभिर्ज-
ग्मुः ॥ २ ॥ न मृषा श्रान्तं यदवन्ति देवा विश्वा इत्स्पृधो अभ्यश्नवाव। ज-
येदत्र शतनीथमाजिं यत्सम्यञ्चा मिथुनावभ्यजाव ॥ ३ ॥ नदस्य मा रुधतः
म आगन्नित आजातो अमुतः कुतश्चित्। लोपामुद्रा वृषणं नीरिणाति धीरमधीरा
ति श्वसन्तम् ॥४॥ इमं नु सोममन्तितो हृत्सु पीतमुप ब्रुवे। यत्सीमागश्चकृमा त-
मृळतु पुलुकामो हि मर्त्यः ॥ ५ ॥ अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं ब-
मिच्छमानः। उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम॥६॥ २२॥ २३॥

॥ १८० ॥ १–१० अगस्त्य ऋषिः॥ अश्विनौ देवते॥ छन्दः–१, ४, ७
चृत् त्रिष्टुप्। ३, ५, ६, ८ विराट् त्रिष्टुप्। १० त्रिष्टुप्। २, ६ भुरिक्
ङ्क्तिः॥ स्वरः–१, ३—८, १० धैवतः। २, ६ पञ्चमः॥

॥ १८० ॥ युवो रजांसि सुयमासो अश्वा रथो यद्वां पर्यर्णांसि दीयत्। हि-
ययां वां पवयः प्रुषायन्मध्वः पिबन्ता उषसः सचेथे ॥ १ ॥ युवमत्यस्याव न-
ो यद्विपत्मनो नर्यस्य प्रयज्योः। स्वसा यद्वां विश्वगूर्ती भराति वाजायेट्टे म-
ाविषे च ॥ २ ॥ युवं पय उस्रियायामधत्तं पक्वमामायामव पूर्व्यं गोः। अन्त-
निनो वामृतप्सू ह्वारो न शुचिर्यजते हविष्मान् ॥ ३ ॥ युवं ह घर्मं मधुमन्तम
ऽपो न क्षोदोऽवृणीतमेषे। तद्वां नरावश्विना पश्वइष्टी रथ्येव चक्रा प्रति य

न्ति मध्वः ॥ ४ ॥ आ वां दानाय ववृतीय दस्रा गोरोहेण तौग्र्यो न जिव्रि
अपः क्षोणी सचते माहिना वां जूर्णो वामक्षुरंहसो यजत्रा ॥ ५ ॥ २३ ॥ नि
युवेथे नियुतः सुदानू उप स्वधाभिः सृजथः पुरंधिम् । प्रेषद्वेषद्वातो न सूरिरा
ददे सुव्रतो न वाजम् ॥ ६ ॥ वयं चिद्धि वां जरितारः सत्या विपन्यामहे वि
णिर्हितावान् । अधा चिद्धि ष्माश्विनावनिन्द्या पाथो हि ष्मा वृषणावन्तिदे
॥ ७ ॥ युवां चिद्धि ष्माश्विनावनु द्यून्विरुद्रस्य प्रस्रवणस्य सातौ अगस्त्यो नरां
प्रशस्तः काराधुनीव चितयत्सहस्रैः ॥ ८ ॥ प्र यद्वहेथे महिना रथस्य प्र स्य
याथो मनुषो न होता । धत्तं सूरिभ्य उत वा स्वश्व्यं नासत्या रयिषाचः स्याम ॥
तं वां रथं वयमद्या हुवेम स्तोमैरश्विना सुविताय नव्यं । अरिष्टनेमिं परि द्या
यानं विद्यामेषं वृजनं जीरदानुम् ॥ १० ॥ २४ ॥

॥ १८१ ॥ १–९ अगस्त्य ऋषिः ॥ अश्विनौ देवते ॥ छन्दः—१, ३ वि
त्रिष्टुप् । २, ४, ६, ७, ८, ९ निचृत् त्रिष्टुप् । ५ त्रिष्टुप् ॥ धैवतः स्वरः

॥ १८१ ॥ कदु प्रेष्ठाविषां रयीणामध्वर्यन्ता यदुन्निनीथो अपाम् । अयं
यज्ञो अकृत प्रशस्तिं वसुधिती अवितारा जनानाम् ॥ १ ॥ आ वामश्वासः
यः पयस्पा वातरंहसो दिव्यासो अत्याः । मनोजुवो वृषणो वीतपृष्ठा एह स्वर
अश्विना वहन्तु ॥ २ ॥ आ वां रथोऽवनिर्न प्रवत्वान्त्सृप्रवन्धुरः सुविताय गम्य
वृष्णः स्थातारा मनसो जवीयानहम्पूर्वो यजतो धिष्ण्या यः ॥ ३ ॥ इहेह ज
समेवावशीतामरेपसा तन्वा३नामभिः स्वैः । जिष्णुर्वामन्यः सुमखस्य सूरि
अन्यः सुभगः पुत्र ऊहे ॥ ४ ॥ प्र वां निचेरुः ककुहो वशाँ अनु पिशङ्गरूप
दनानि गम्याः । हरी अन्यस्य पीपयन्त वाजैर्मथ्ना रजांस्यश्विना वि घोषैः
॥ २५ ॥ प्र वाँ शरद्वान्वृषभो न निष्षाट् पूर्वीरिषश्चरति मध्व इष्णन् । ए
न्यस्य पीपयन्त वाजैर्वेषन्तीरूर्ध्वा नद्यो न आगुः ॥ ६ ॥ असर्जि वां स्थ
वेधसा गीर्बाळ्हे अश्विना त्रेधा क्षरन्ती । उपस्तुतावतं नाधमानं यामन्नयाम
णुतं हवं मे ॥ ७ ॥ उत स्या वां रुशतो वप्ससो गीस्त्रिबर्हिषि सदसि पिन्वते
वृषा वां मेघो वृषणा पीपाय गोर्न सेके मनुषो दशस्यन् ॥ ८ ॥ युवां पूषेवा
ना पुरंधिरग्निमुषां न जरते हविष्मान् । हुवे यद्वां वरिवस्या गृणानो विद्या
वृजनं जीरदानुम् ॥ ९ ॥ २६ ॥

॥ १८२ ॥ १–८ अगस्त्य ऋषिः ॥ अश्विनौ देवते ॥ छन्दः—१, ५

ुज्जगती । ३ जगती । ४ विराड् जगती । २ स्वराड् त्रिष्टुप् । ६, ८ स्वरा-
ङ्क्तिः ॥ स्वरः-१, ३-५, ७ निषादः । २, ६, ८ पञ्चमः ॥

॥ १८२ ॥ अभूँदिदं वयुनमो षु भूँषता रथो वृषँण्वान्मदँता मनीषिणः ।
ञ्जिन्वा धिष्ण्यां विश्पलावसू दिवो नपाता सुकृते शुचिव्रता ॥ १ ॥ इन्द्र-
हि धिष्ण्या मरुत्तमा दस्रा दंसिष्ठा रथ्या रथीतमा । पूर्णं रथं वहेथे मध्व
चितं तेनं दाश्वांसमुप याथो अश्विना ॥ २ ॥ किमत्र दस्रा कृणुथः किमासा-
नो यः कश्चिदहविर्महीयते । अति क्रमिष्टं जुरतं पणेरसुं ज्योतिर्विप्राय कृ-
वचस्यवे ॥ ३ ॥ जम्भयंतमभितो रायतः शुनो हतं मृधो विदथुस्तान्यश्विना ।
वाचं जरितू रत्निनीं कृतमुभा शंसं नासत्यावतं मम ॥ ४ ॥ युवमेतं चक्रथुः
धुषु प्लवमात्मन्वन्तं पक्षिणं तौग्र्याय कम् । येनं देवत्रा मनसा निरूहथुः सुप-
पेतथुः क्षोदसो महः ॥ ५ ॥ २७ ॥ अवविद्धं तौग्र्यमप्स्व१न्तरनारम्भणे
मे प्रविद्धम् । चतस्रो नावो जठलस्य जुष्टा उदश्विभ्यामिषिताः पारयन्ति
॥ कः स्विद्वृक्षो निष्ठितो मध्ये अर्णसो यं तौग्र्यो नाधितः पर्यषस्वजत् ।
मृगस्य पतरोरिवारभ उदश्विना ऊहथुः श्रोमताय कम् ॥ ७ ॥ तद्वां नरा
त्यावनु ष्याद्यद्वां मानास उचथमवोचन् । अस्मादद्य सदसः सोम्यादा वि-
षं वृजनं जीरदानुम् ॥ ८ ॥ २८ ॥

॥ १८३ ॥ १-६ अगस्त्य ऋषिः ॥ अश्विनौ देवते ॥ छन्दः-१, ४, ६
ुप् । २, ३ निचृत् त्रिष्टुप् । ५ भुरिक् पङ्क्तिः ॥ स्वरः-१-४, ६ धैवतः ।
ञ्चमः ॥

॥ १८३ ॥ तं युञ्जाथां मनसो यो जवीयान् त्रिबन्धुरो वृषणा यस्त्रिचक्रः ।
पयाथः सुकृतो दुरोणं त्रिधातुना पतथो विर्न पर्णैः ॥ १ ॥ सुवृद्रथो वर्तते
भि क्षां यत्तिष्ठथः क्रतुमन्तानु पृक्षे । वपुर्वपुष्या सचतामियं गीर्दिवो दुहित्रो-
सचेथे ॥ २ ॥ आ तिष्ठतं सुवृतं यो रथो वामनु व्रतानि वर्तते हविष्मान् ।
नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥ ३ ॥ मा वां वृको मा वृ-
दधर्षीन्मा परि वर्क्तमुत माति धक्तम् । अयं वां भागो निहित इयं गीर्दस्रा-
वां निधयो मधूनाम् ॥ ४ ॥ युवां गोतमः पुरुमीळ्हो अत्रिर्दस्रा हवतेऽवसे
ष्मान् । दिशं न दिष्टामृजूयेव यन्ता मे हवं नासत्योप यातम् ॥ ५ ॥ अता-

रिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि। एह यातं पथिभिर्दे
नैर्विद्यामेषं वृजनं जीरदानुम् ॥ ६ ॥ २९ ॥ ४ ॥

॥ १८४ ॥ १–६ अगस्त्य ऋषिः ॥ अश्विनौ देवते ॥ छन्दः–१ पङ्क्ति
भुरिक् पङ्क्तिः। ५, ६ निचृत् पङ्क्तिः। २, ३ विराट् त्रिष्टुप्॥ स्वरः–१, ४, ५,
ञ्चमः। २, ३ धैवतः ॥

॥ १८४ ॥ ता वामद्य तावपरं हुवेमोच्छन्त्यामुषसि वह्निरुक्थैः। नासत्या
चित्सन्तावर्यो दिवो नपाता सुदास्तराय ॥ १ ॥ अस्मे ऊ षु वृषणा मादये
त्पणींर्हतमूर्म्या मदन्ता। श्रुतं मे अच्छोक्तिभिर्मतीनामेष्टा नरा निचेतारा च
॥ २ ॥ श्रिये पूषन्निषुकृतेव देवा नासत्या वहतुं सूर्यायाः। वच्यन्ते वां क
अप्सु जाता युगा जूर्णेव वरुणस्य भूरेः ॥ ३ ॥ अस्मे सा वां माध्वी राति
स्तोमं हिनोतं मान्यस्य कारोः। अनु यद्वां श्रवस्या सुदानू सुवीर्याय चर्षणयो
दन्ति ॥ ४ ॥ एष वां स्तोमो अश्विनावकारि मानेभिर्मघवाना सुवृक्ति। या
र्तिस्तनयाय त्मने चागस्त्ये नासत्या मदन्ता ॥ ५ ॥ अतारिष्म तमसस्पार
प्रति वां स्तोमो अश्विनावधायि। एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जी
नुम् ॥ ६ ॥ १ ॥

॥ १८५ ॥ १–११ अगस्त्य ऋषिः ॥ द्यावापृथिव्यौ देवते ॥ छन्दः–
६, ७, ८, १०, ११ त्रिष्टुप्। २ विराट् त्रिष्टुप्। ३, ४, ५, ९ निचृत् त्रि
धैवतः स्वरः ॥

॥ १८५ ॥ कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद।
त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥ १ ॥ भूरिं द्वे अचरन्ती
रन्तं पद्वन्तं गर्भमपदी दधाते। नित्यं न सूनुं पित्रोरुपस्थे द्यावा रक्षतं पृथि
अभ्वात् ॥ २ ॥ अनेहो दात्रमदितेरनर्वं हुवे स्वर्वदवधं नमस्वत्। तद्रोदसी ज
जरित्रे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥३॥ अतप्यमाने अवसावन्ती अनु
रोदसी देवपुत्रे। उभे देवानामुभयेभिरह्नां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥
सङ्गच्छमाने युवती समन्ते स्वसारा जामी पित्रोरुपस्थे। अभिजिघ्रन्ती भुवनस्य
द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ५ ॥ २ ॥ उर्वी सद्मनी बृहती ऋतेन हु
वानामवसा जनित्री। दधाते ये अमृतं सुप्रतीके द्यावा रक्षतं पृथिवी नो अ

॥ उर्वी पृथ्वी बहुले दूरेअन्ते उप ब्रुवे नमसा यज्ञे अस्मिन् । दधाते ये सुभगे
तूर्ती द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ७ ॥ देवान्वा यच्चकृमा कच्चिदागः
यं वा सदमिज्जास्पतिं वा । इयं धीर्भूया अवयानमेषां द्यावा रक्षतं पृथिवी
अभ्वात् ॥ ८ ॥ उभा शंसा नर्या मामविष्टामुभे मामूती अवसा सचेताम् । भूरि
र्यः सुदास्तरायेषा मदन्त इषयेम देवाः ॥ ९ ॥ ऋतं दिवे तदवोचं पृथिव्या
अश्रावाय प्रथमं सुमेधाः । पातामवद्याद्दुरिताद्भीके पिता माता च रक्षतामवोभिः
० ॥ इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवे वाम् । भूतं देवानामवमे
भिर्विद्यामेषं वृजनं जीरदानुम् ॥ ११ ॥ ३ ॥

॥ १८६ ॥ १–११ अगस्त्य ऋषिः ॥ विश्वेदेवा देवता ॥ छन्दः–१, ८,
त्रिष्टुप् । २, ४ निचृत् त्रिष्टुप् । ११ भुरिक् त्रिष्टुप् । ३, ५, ७ भुरिक् प-
। ६ पङ्क्तिः । १० स्वराट् पङ्क्तिः ॥ स्वरः–१, २, ४, ८, ९, ११ धैवतः ।
५, ७, ६, १० पञ्चमः ॥

॥ १८६ ॥ आ न इळाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु । अ-
यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ॥१॥ आ नो विश्व आ-
गमन्तु देवा मित्रो अर्यमा वरुणः सजोषाः । भुवन्यथा नो विश्वे वृधासः क-
षाहा विथुरं न शवः ॥ २ ॥ प्रेष्ठं वो अतिथिं गृणीषेऽग्निं शस्तिभिस्तुर्वणिः
षाः । असद्यथा नो वरुणः सुकीर्तिरिषश्च पर्षदरिगूर्तः सूरिः ॥ ३ ॥ उप
ष नमसा जिगीषोषासानक्ता सुदुघेव धेनुः । समाने अहन्विमिमानो अर्कं
रूपे पयसि सस्मिन्नूधन् ॥ ४ ॥ उत नोऽहिर्बुध्न्यो३ मयस्कः शिशुं न पिप्युषी-
ति सिन्धुः । येन नपातमपां जुनाम मनोजुवो वृषणो यं वहन्ति ॥ ५ ॥
॥ उत न ईं त्वष्टा गन्त्वच्छा स्मत्सूरिभिरभिपित्वे सजोषाः । आ वृत्रहेन्द्र-
णिप्रास्तुविष्टमो नरां न इह गम्याः ॥ ६ ॥ उत न ईं मतयोऽश्वयोगाः शि-
गावस्तरुणं रिहन्ति । तमीं गिरो जनयो न पत्नीः सुरभिष्टमं नरां नसन्त
॥ उत न ईं मरुतो वृद्धसेनाः स्मद्रोदसी समनसः सदन्तु । पृषदश्वासोऽ-
ी न रथा रिशादसो मित्रयुजो न देवाः ॥ ८ ॥ प्र नु यदेषां महिना चिकित्रे
ञ्जते प्रयुजस्ते सुवृक्ति । अध यदेषां सुदिने न शरुर्विश्वमेरिणं प्रुषायन्त सेनाः
॥ प्रो अश्विनाववसे कृणुध्वं प्र पूषणं स्वतवसो हि सन्ति । अद्वेषो विष्णु-
ऋभुक्षा अच्छा सुम्नाय ववृतीय देवान् ॥ १० ॥ इयं सा वो अस्मे दीधि-

तिर्यजत्रा अपिशाणीं च सदनी च भूयाः । नि या देवेषु यतते वसूयुर्विध
वृजनं जीरदानुम् ॥ ११ ॥ ५ ॥

॥ १८७ ॥ १–११ अगस्त्य ऋषिः ॥ ओषधयो देवता ॥ छन्दः–१
ष्णिक् । ६, ७ भुरिगुष्णिक् । २, ८ निचृद् गायत्री । ४ विराड् गायत्री ।
१० गायत्री च । ३, ५ निचृदनुष्टुप् । ११ स्वराडनुष्टुप् ॥ स्वरः–१, ६, ७
षभः । २, ८, ४, ६, १० षड्जः । ३, ५, ११ गान्धारः ॥

॥ १८७ ॥ पितुं नु स्तोषं महो धर्माणं तविषीम् । यस्य त्रितो व्यो
वृत्रम् । विपर्वमर्दयत् ॥१॥ स्वादो पितो मधो पितो वयं त्वा ववृमहे । अस्मा
विता भव ॥२॥ उप नः पितवा चर शिवः शिवाभिरूतिभिः । मयोभुरद्विषे
सखा सुशेवो अद्वयाः ॥ ३ ॥ तव त्ये पितो रसा रजांस्यनु विष्ठिताः । दिवि
ता इव श्रिताः ॥ ४ ॥ तव त्ये पितो ददतस्तव स्वादिष्ठ ते पितो । प्र स्वाद्म
रसानां तुविग्रीवा इवेरते ॥ ५ ॥ ६ ॥ त्वे पितो महानां देवानां मनो हित
अकारि चारु केतुना तवाहिमवसावधीत् ॥ ६ ॥ यददो पितो अजगन्विवस्व
तानाम् । अत्रा चिन्नो मधो पितोऽरं भक्षाय गम्याः ॥ ७ ॥ यददामोषध
परिंशमारिशामहे । वातापे पीव इद्भव ॥ ८ ॥ यत्ते सोम गवाशिरो य
शिरो भजामहे । वातापे पीव इद्भव ॥ ९ ॥ करम्भ ओषधे भव पीवो वृक्क
दारथिः । वातापे पीव इद्भव ॥ १० ॥ तं त्वा वयं पितो वचोभिर्गावो न ह
सुषूदिम । देवेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादम् ॥ ११ ॥ ७ ॥

॥ १८८ ॥ १–११ अगस्त्य ऋषिः ॥ आप्रियो देवता ॥ छन्दः–१, ३
६, ७, १० निचृद्गायत्री । २, ४, ८, ९, ११ गायत्री ॥ षड्जः स्वरः ॥

॥ १८८ ॥ समिद्धो अद्य राजसि देवो देवैः सहस्रजित् । दूतो हव्या
विवह ॥ १ ॥ तनूनपादृतं यते मध्वा यज्ञः समज्यते । दधत्सहस्रिणीरिषः ॥
आजुह्वानो न ईड्यो देवाँ आ वक्षि यज्ञियान् । अग्ने सहस्रसा असि ॥३॥ प्रा
बर्हिरोजसा सहस्रवीरमस्तृणन् । यत्रादित्या विराजथ ॥४॥ विराट् सम्राड्वि
प्रभ्वीर्बह्वीश्च भूयसीश्च याः । दुरो घृतान्यक्षरन् ॥ ५ ॥ ८ ॥ सुरुक्मे हि
पेशसाधि श्रिया विराजतः । उषासावेह सीदताम् ॥ ६ ॥ प्रथमा हि सुवा
होतारा दैव्या कवी । यज्ञं नो यक्षतामिमम् ॥ ७ ॥ भारतीळे सरस्वति या

र्वी उपब्रुवे । ता नश्चोदयत श्रिये ॥ ८ ॥ त्वष्टा रूपाणि हि प्रभुः पशून्विश्वा-
समानजे । तेषां नः स्फातिमा यज ॥ ९ ॥ उप त्मन्या वनस्पते पाथो देवेभ्यः
ज । अग्निर्हव्यानि सिष्वदत् ॥ १० ॥ पुरोगा अग्निर्देवानां गायत्रेण समज्यते ।
ाहाकृतीषु रोचते ॥ ११ ॥ ९ ॥

॥ १८९ ॥ १–८ अगस्त्य ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, ४, ८ नि-
त् त्रिष्टुप् । २ भुरिक् पङ्क्तिः । ३, ५, ६, स्वराट् पङ्क्तिः । ७ पङ्क्तिः ॥
वरः–१, ४, ८ धैवतः । २, ३, ५–७ पञ्चमः ॥

॥ १८९ ॥ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
योध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १ ॥ अग्ने त्वं पारया
व्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तो-
ाय तनयाय शं योः ॥ २ ॥ अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमन्त
ष्टीः । पुनरस्मभ्यं सुवितायं देव क्षां विश्वेभिरमृतेभिर्यजत्र ॥ ३ ॥ पाहि नो
ग्ने पायुभिरजस्रैरुत प्रिये सदन आ शुशुक्वान् । मा ते भयं जरितारं यविष्ठ
नं विदन्मापरं सहस्वः ॥ ४ ॥ मा नो अग्नेऽव सृजो अघायाविष्यवे रिपवे दु-
छुनायै । मा दत्वते दशते मादते नो मा रीषते सहसावन्परा दाः ॥ ५ ॥
० ॥ वि घ त्वावाँ ऋतजात यंसद्गृणानो अग्ने तन्वे वरूथम् । विश्वाद्रिरिक्षो-
त वा निनित्सोरभिह्रुतामसि हि देव विष्पट् ॥ ६ ॥ त्वं ताँ अग्न उभयान्वि
द्वान्वेषि प्रपित्वे मनुषो यजत्र । अभिपित्वे मनवे शास्यो भूर्मर्मृजेन्य उशिग्भि-
क्रः ॥ ७ ॥ अवोचाम निवचनान्यस्मिन्मानस्य सूनुः सहसाने अग्नौ । वयं
हस्रमृषिभिः सनेम विद्यामेषं वृजनं जीरदानुम् ॥ ८ ॥ ११ ॥

॥ १९० ॥ १–८ अगस्त्य ऋषिः ॥ बृहस्पतिर्देवता ॥ छन्दः–१, २, ३
चृत् त्रिष्टुप् । ४, ८ त्रिष्टुप् । ५, ६, ७ स्वराट् पङ्क्तिः ॥ धैवतः स्वरः ॥

॥ १९० ॥ अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः । गाथान्यः
रुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्ताः ॥ १ ॥ तमृत्विया उप वाचः
चन्ते सर्गो न यो देवयतामसर्जि । बृहस्पतिः स ह्यञ्जो वरांसि विभ्वाभवत्स-
ते मातरिश्वा ॥ २ ॥ उपस्तुतिं नमस उद्यतिं च श्लोकं यंसत्सवितेव प्र बाहू ।
स्य क्रत्वाहन्यो यो अस्ति मृगो न भीमो अरक्षसस्तुविष्मान् ॥ ३ ॥ अस्य

श्लोको द्विवीयते पृथिव्यामत्यो न यंसद्यक्षभृद्विचेताः । मृगाणां न हेतयो यन्ति
चेमा बृहस्पतेराहिमायाँ अभिद्यून् ॥ ४॥ ये त्वा देवोस्रिकं मन्यमानाः पापा भद्र
मुपजीवंति पज्राः । न दूढ्ये३अनु ददासि वामं बृहस्पते चयस इत्पियारुम् ॥ ५॥
१२ ॥ सुप्रैतुः सूयवसो न पन्था दुर्नियन्तुः परिप्रीतो न मित्रः । अनर्वाणो अभि
ये चक्षते नोऽपीवृता अपोर्णुवन्तो अस्थुः ॥ ६ ॥ सं यं स्तुभोऽवनयो न यन्ति
समुद्रं न स्रवतो रोधचक्राः । स विद्वाँ उभयं चष्टे अन्तर्बृहस्पतिस्तर आपश्च गृ
ध्रः ॥ ७ ॥ एवा महस्तुविजातस्तुविष्मान्बृहस्पतिर्वृषभो धायि देवः । स नः
स्तुतो वीरवद्धातु गोमद्विद्यामेषं वृजनं जीरदानुम् ॥ ८ ॥ १३ ॥

॥ १६१ ॥ १-१६ अगस्त्य ऋषिः ॥ अबोषधि सूर्या देवता ॥ छन्दः—
उष्णिक् । २ भुरिगुष्णिक् । ३, ७ स्वराडुष्णिक् । १३ विराडुष्णिक् । ४, ६
१४ विराडनुष्टुप् । ५, ८, १५ निचृदनुष्टुप् ६ अनुष्टुप् । १०, ११ निचृत् ब्राह्म्य
नुष्टुप् । १२ विराड् ब्राह्म्यनुष्टुप् । १६ भुरिगनुष्टुप् ॥ स्वरः—१—३, ७, १
ऋषभः । ४—६, ८—१२, १४—१६ गान्धारः ॥

॥ १६१ ॥ कङ्कतो न कङ्कतोऽथो सतीनकङ्कतः । द्वाविति प्लुषी इति न्य
दृष्टा अलिप्सत ॥ १ ॥ अदृष्टान्हन्त्यायत्यथो हन्ति परायती । अथो अवघ्न
हन्त्यथो पिनष्टि पिंषती ॥ २ ॥ शरासः कुशरासो दर्भासः सैर्या उत । मौञ्ज
अदृष्टा वैरिणाः सर्वे साकं न्यलिप्सत ॥ ३ ॥ नि गावो गोष्ठे असदन्नि मृगास
अविक्षत । नि केतवो जनानां न्य१दृष्टा अलिप्सत ॥ ४ ॥ एत उ त्ये प्रत्यदृश्र
न्प्रदोषं तस्करा इव । अदृष्टा विश्वदृष्टाः प्रतिबुद्धा अभूतन ॥ ५ ॥ १४ ॥ द्यौ
पिता पृथिवी माता सोमो भ्रातादितिः स्वसा । अदृष्टा विश्वदृष्टास्तिष्ठतेळय
सु कम् ॥ ६ ॥ ये अंस्या ये अङ्ग्याः सूचीका ये प्रकङ्कताः । अदृष्टाः
चनेह वः सर्वे साकं नि जस्यत ॥ ७ ॥ उत्पुरस्तात्सूर्य एति विश्वदृष्टो अ
ष्टहा । अदृष्टान्त्सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥ ८ ॥ उदपप्तदसौ सूर्यः
विश्वानि जूर्वन् । आदित्यः पर्वतेभ्यो विश्वदृष्टो अदृष्टहा ॥ ९ ॥ सूर्ये विष
संजामि दृतिं सुरावतो गृहे । सो चिन्नु न मराति नो वयं मरामारे अस्य योज
हरिष्ठा मधु त्वा मधुला चकार ॥ १० ॥ १५ ॥ इयत्तिका शकुन्तिका सका
घास ते विषम् । सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा
त्वा मधुला चकार ॥ ११ ॥ त्रिः सप्त विष्पुलिङ्गका विषस्य पुष्यमक्षन् ।

त्रु न मरन्ति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार
१२ ॥ नवानां नवतीनां विषस्य रोपुषीणाम् । सर्वासामग्रभं नामारे अस्य
जनं हरिष्ठा मधु त्वा मधुला चकार ॥ १३ ॥ त्रिः सप्त मयूर्यः सप्त स्वसारो
ग्रुवः । तास्ते विषं वि जभ्रिर उदकं कुम्भिनीरिव ॥ १४ ॥ इयत्तकः कुषुम्भ-
स्तकं भिनद्म्यश्मना । ततो विषं प्र वावृते पराचीरनु संवतः ॥ १५ ॥ कुषुम्भ-
स्तदब्रवीद्गिरेः प्रवर्तमानकः । वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषम् ॥ १६ ॥
६ ॥ २४ ॥ १ ॥

॥ इति प्रथमं मण्डलं समाप्तम् ॥

---

ओ३म्

# अथ द्वितीयं मण्डलम्

॥ १ ॥ १—१६ आङ्गिरसः शौनहोत्रो भार्गवो गृत्समद ऋषिः ॥ अग्नि
देवता ॥ छन्दः—१ पङ्क्तिः । ६ भुरिक् पङ्क्तिः । १३ स्वराट् पङ्क्तिः । २, १५ वि
राड् जगती । १६ निचृज्जगती । ३, ५, ८, १० निचृत् त्रिष्टुप् । ४, ६, ११
१२, १४ भुरिक् त्रिष्टुप् । ७ विराट् त्रिष्टुप् ॥ स्वरः—२-८, १०-१२, १४
१६ धैवतः । १, ६, १३ पञ्चमः ॥

॥ १ ॥ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं व
भ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥ १ ॥ तवाग्ने होत्रं तव पो
मृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः । तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चा
गृहपतिश्च नो दमे ॥ २ ॥ त्वमग्न इन्द्रो वृषभः सतामसि त्वं विष्णुरुरुगायो
मस्यः । त्वं ब्रह्मा रयिविद्ब्रह्मणस्पते त्वं विधर्तः सचसे पुरन्ध्या ॥ ३ ॥ त्वमग्ने रा
वरुणो धृतव्रतस्त्वं मित्रो भवसि दस्म ईड्यः । त्वमर्यमा सत्पतिर्यस्य सम्भुजं त्वमं
विदथे देव भाजयुः ॥ ४ ॥ त्वमग्ने त्वष्टा विधते सुवीर्यं तव ग्नावो मित्रमहः स
जात्यम् । त्वमाशुहेमा ररिषे स्वश्व्यं त्वं नरां शर्धो असि पुरूवसुः ॥ ५ ॥ १७
त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे । त्वं वातैररुणैर्या
शङ्गयस्त्वं पूषा विधतः पासि नु त्मना ॥ ६ ॥ त्वमग्ने द्रविणोदा अरङ्कृ
त्वं देवः सविता रत्नधा असि । त्वं भगो नृपते वस्व ईशिषे त्वं पायुर्दमे यस्ते
विधत् ॥ ७ ॥ त्वामग्ने दम आ विश्पतिं विशस्त्वां राजानं सुविदत्रमृञ्जते
त्वं विश्वानि स्वनीक पत्यसे त्वं सहस्राणि शता दश प्रति ॥ ८ ॥ त्वाम
पितरमिष्टिभिर्नरस्त्वां भ्रात्राय शम्या तनूरुचम् । त्वं पुत्रो भवसि यस्तेऽविधत्त
सखा सुशेवः पास्याधृषः ॥९॥ त्वमग्न ऋभुराके नमस्यस्त्वं वाजस्य क्षुमतो रा
ईशिषे । त्वं वि भास्यनु दक्षि दावने त्वं विशिक्षुरसि यज्ञमातनिः ॥ १० ॥ १८

ग्ने अदितिर्देव दाशुषे त्वं होत्रा भारती वर्धसे गिरा । त्वमळा शतहिमासि
से त्वं वृत्रहा वसुपते सरस्वती ॥ ११ ॥ त्वमग्ने सुभृत उत्तमं वयस्तव स्पार्हे
आ सन्दृशि श्रियः । त्वं वाजः प्रतरणो बृहन्नसि त्वं रयिर्बहुलो विश्वतस्पृथुः
१२ ॥ त्वामग्न आदित्यास आस्यं त्वां जिह्वां शुचयश्चक्रिरे कवे । त्वां राति-
वो अध्वरेषु सश्चिरे त्वे देवा हविरदन्त्याहुतम् ॥ १३ ॥ त्वे अग्ने विश्वे अमृतासो
हं आसा देवा हविरदन्त्याहुतम् । त्वया मर्तासः स्वदन्त आसुतिं त्वं गर्भो
धां जज्ञिषे शुचिः ॥ १४ ॥ त्वं तान्त्सं च प्रति चासि मज्मनाग्ने सुजात प्र च
रिच्यसे । पृक्षो यदत्र महिना वि ते भुवदनु द्यावापृथिवी रोदसी उभे ॥ १५ ॥
स्तोतृभ्यो गोअग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः । अस्माञ्च तांश्च प्र
नेषि वस्य आ बृहद्वदेम विदथे सुवीराः ॥ १६ ॥ १९ ॥

॥ २ ॥ १–१३ गृत्समद ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, २, ७, १२
ाद् जगती । ४ जगती । ५, ६, ९, १३ निचृज्जगती । ३, ८, १०, ११ भु-
् त्रिष्टुप् ॥ स्वरः– १, २, ४–७, ९, १२, १३ निषादः । ३, ८, १०, ११
तः ॥

॥ २ ॥ यज्ञेन वर्धत जातवेदसमग्निं यजध्वं हविषा तना गिरा । समिधानं सु-
सं स्वर्णरं द्युक्षं होतारं वृजनेषु धूर्षदम् ॥ १ ॥ अभि त्वा नक्तीरुषसो ववाशि-
वत्सं न स्वसरेषु धेनवः । दिव इवेदरतिर्मानुषा युगा क्षपो भासि पुरुवार
तः ॥ २ ॥ तं देवा बुध्ने रजसः सुदंससं दिवस्पृथिव्योररतिं न्येरिरे । रथमिव
शुक्रशोचिषमग्निं मित्रं न क्षितिषु प्रशंस्यम् ॥ ३ ॥ तमुक्षमाणं रजसि स्व आ
चन्द्रमिव सुरुचं ह्वार आ दधुः । पृश्न्याः पतरं चितयन्तमक्षभिः पाथो न
जनसी उभे अनु ॥ ४ ॥ स होता विश्वं परि भूत्वध्वरं तमु हव्यैर्मनुष ऋ-
ते गिरा । हिरिशिप्रो वृधसानासु जर्भुरद्द्यौर्न स्तृभिश्चितयद्रोदसी अनु ॥ ५ ॥
॥ स नो रेवत्समिधानः स्वस्तये सन्ददस्वान्रयिमस्मासु दीदिहि । आ नः कृ-
व सुविताय रोदसी अग्ने हव्या मनुषो देव वीतये ॥ ६ ॥ दा नो अग्ने बृहतो
सहस्रिणो दुरो न वाजं श्रुत्या अपा वृधि । प्राची द्यावापृथिवी ब्रह्मणा कृधि
र्ण शुक्रमुषसो वि दिद्युतः ॥ ७ ॥ स इधान उषसो राम्या अनु स्वर्ण दी-
रुषेण भानुना । होत्राभिरग्निर्मनुषः स्वध्वरो राजा विशामतिथिश्चारुरायवे
॥ एवा नो अग्ने अमृतेषु पूर्व्य धीष्पीपाय बृहद्दिवेषु मानुषा । दुहाना धेनु-

वृजनेषु कारवे त्मना शतिनं पुरुरूपमिषणि ॥ ९ ॥ वयमग्ने अर्वता वा सुवीर्यं
ह्मणा वा चितयेमा जनाँ अति । अस्माकं द्युम्नमधि पञ्च कृष्टिषूच्चा स्वर्ण शु
चीत दुष्टरम् ॥ १० ॥ स नो बोधि सहस्य प्रशंस्यो यस्मिन्त्सुजाता इषयन्त
रयः । यमग्ने यज्ञमुपयन्ति वाजिनो नित्ये तोके दीदिवांसं स्वे दमे ॥ ११ ॥
भयासो जातवेदः स्याम ते स्तोतारो अग्ने सूरयश्च शर्मणि । वस्वो रायः
श्चन्द्रस्य भूयसः प्रजावतः स्वपत्यस्य शग्धि नः ॥ १२ ॥ यो स्तोतृभ्यो गोअ
श्वपेशसमग्ने रातिमुपसृजन्ति सूरयः । अस्माञ्च तांश्च प्र हि नेषि वस्य आ बृ
देम विदथे सुवीराः ॥ १३ ॥ २१ ॥

॥ ३ ॥ १–११ गृत्समद ऋषिः ॥ अग्निर्देवता ॥ छन्दः—१, २ विराट्
ष्टुप् । ३, ५, ६ भुरिक् त्रिष्टुप् । ४, ९, ११ निचृत् त्रिष्टुप् । ८, १० त्रिष्टुप्
जगती ॥ स्वरः—१–६, ८–११ धैवतः । ७ निषादः ॥

॥ ३ ॥ समिद्धो अग्निर्निहितः पृथिव्यां प्रत्यङ् विश्वानि भुवनान्यस्थात् । हो
पावकः प्रदिवः सुमेधा देवो देवान्यजत्वग्निरर्हन् ॥ १ ॥ नराशंसः प्रति धा
न्यञ्जन् तिस्रो दिवः प्रति मह्ना स्वर्चिः । घृतप्रुषा मनसा हव्यमुन्दन्मूर्धन्यज्ञस्य
मनक्तु देवान् ॥ २ ॥ ईळितो अग्ने मनसा नो अर्हन्देवान्यक्षि मानुषात्पूर्वो अ
स आ वह मरुतां शर्धो अच्युतमिन्द्रं नरो बर्हिषदं यजध्वम् ॥ ३ ॥ देव ब
र्धमानं सुवीरं स्तीर्णं राये सुभरं वेद्यस्याम् । घृतेनाक्तं वसवः सीदतेदं विश्वे देवा आ
दित्या यज्ञियासः ॥ ४ ॥ वि श्रयन्तामुर्विया हूयमाना द्वारो देवीः सुप्रायणा नमोभि
व्यचस्वतीर्वि प्रथन्तामजुर्या वर्णं पुनाना यशसं सुवीरम् ॥ ५ ॥ २२ ॥ साध्वपां
सनता न उक्षिते उषासानक्ता वय्येव रण्विते । तन्तुं ततं संवयन्ती समीची
ज्ञस्य पेशः सुदुघे पयस्वती ॥ ६ ॥ दैव्या होतारा प्रथमा विदुष्टर ऋजु यक्ष
समृचा वपुष्टरा । देवान्यजन्तावृतुथा समञ्जतो नाभा पृथिव्या अधि सानुषु
॥ ७ ॥ सरस्वती साधयन्ती धियं न इळा देवी भारती विश्वतूर्तिः । तिस्रो दे
स्वधया बर्हिरेदमच्छिद्रं पान्तु शरणं निषद्य ॥ ८ ॥ पिशङ्गरूपः सुभरो वयोध
श्रुष्टी वीरो जायते देवकामः । प्रजां त्वष्टा विष्यतु नाभिमस्मे अथा देवानामप्ये
पाथः ॥ ९ ॥ वनस्पतिरवसृजन्नुप स्थादग्निर्हविः सूदयाति प्र धीभिः । त्रिधा
मक्तं नयतु प्रजानन्देवेभ्यो दैव्यः शमितोप हव्यम् ॥ १० ॥ घृतं मिमिक्षे घृतमस्य
योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमा वह मादयस्व स्वाहाकृतं वृषभ व
हव्यम् ॥ ११ ॥ २३ ॥

॥ ४ ॥ १—९ सोमाहुतिर्भार्गव ऋषिः ॥ अग्निर्देवता ॥ छन्दः—१, ८
राट् पङ्क्तिः । २, ३, ५, ६, ७ आर्षी पङ्क्तिः । ४ ब्राह्मयुष्णिक् । ९ निचृत्त्रि-
र् ॥ स्वरः—१—३, ५—८ पञ्चमः । ४ ऋषभः । ९ धैवतः ॥

॥ ४ ॥ हुवे वः सुद्योत्मानं सुवृक्तिं विशामग्निमतिथिं सुप्रयसम् । मित्र
यो दिधिषाय्यो भूदेव आदेवे जने जातवेदाः ॥ १ ॥ इमं विधन्तो अपां स-
स्थे द्वितादधुर्भृगवो विक्ष्वा३योः । एष विश्वान्यभ्यस्तु भूमा देवानामग्निररतिर्जी-
श्वः ॥ २ ॥ अग्निं देवासो मानुषीषु विक्षु प्रियं धुः क्षेष्यन्तो न मित्रम् । स
दयदुशतीरूर्म्या आ दक्षाय्यो यो दास्वते दम आ ॥ ३ ॥ अस्य रण्वा स्व-
व पुष्टिः सन्दृष्टिरस्य हियानस्य दक्षोः । वि यो भरिभ्रदोषधीषु जिह्वामत्यो न
थ्यो दोधवीति वारान् ॥ ४ ॥ आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामि-
त वर्णम् । स चित्रेण चिकिते रंसु भासा जुजुर्वा यो मुहुरा युवा भूत् ॥५॥२४॥
यो वना तातृषाणो न भाति वार्ण पथा रथ्येव स्वानीत् । कृष्णाध्वा तपू
वाश्चिकेत द्यौरिव स्मयमानो नभोभिः ॥६॥ स यो व्यस्थादभि दक्षदुर्वीं पशुर्नैति
युरगोपाः । अग्निः शोचिष्माँ अतसान्युष्णन्कृष्णव्यथिरस्वदयन्न भूम ॥७॥ नू
पूर्वस्यावसो अधीतौ तृतीये विदथे मन्म शंसि । अस्मे अग्ने संयद्वीरं बृहन्तं क्षुमन्तं
जं स्वपत्यं रयिं दाः ॥८॥ त्वया यथा गृत्समदासो अग्ने गुहा वन्वन्त उपराँ
भि ष्युः । सुवीरासो अभिमातिषाहः स्मत्सूरिभ्यो गृणते तद्वयो धाः ॥९॥२५॥

॥ ५ ॥ १—८ सोमाहुतिर्भार्गवः ऋषिः ॥ अग्निर्देवता ॥ छन्दः—१,
६ निचृदनुष्टुप् । २, ४, ५ अनुष्टुप् । ८ विराडनुष्टुप् । ७ भुरिगुष्णिक्
रः—१—६, ८ गान्धारः । ७ निषादः ॥

॥ ५ ॥ होताजनिष्ट चेतनः पिता पितृभ्य ऊतये । प्रयक्षञ्जेन्यं वसु शकेम
जिनो यमम् ॥ १ ॥ आ यस्मिन्त्सप्त रश्मयस्तता यज्ञस्य नेतरि । मनुष्वद्दैव्य-
ष्टमं पोता विश्वं तदिन्वति ॥ २ ॥ दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत् । परि
श्वानि काव्या नेमिश्चक्रमिवाभवत् ॥ ३ ॥ साकं हि शुचिना शुचिः प्रशास्ता
तुनाजनि । विद्वाँ अस्य व्रता ध्रुवा वया इवानु रोहते ॥ ४ ॥ ता अस्य वर्ण-
युवो नेष्टुः सचन्त धेनवः । कुवित्तिसृभ्य आ वरं स्वसारो या इदं ययुः ॥५॥
दी मातुरुप स्वसा घृतं भरन्त्यस्थित । तासामध्वर्युरागतौ यवो वृष्टीव मोदते ॥६॥
: स्वाय धायसे कृणुतामृत्विगृत्विजम् । स्तोमं यज्ञं चादरं वनेमा ररिमा वयम्

॥ ७ ॥ यथा विद्वाँ अरं करद्विश्वेभ्यो यजतेभ्यः । अयमग्ने त्वे अपि यं
चकृमा वयम् ॥ ८ ॥ २६ ॥

॥ ६ ॥ १–८ सोमाहुतिर्भार्गव ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, ३,
८ गायत्री । २, ४, ६ निचृद्गायत्री । ७ विराट् गायत्री ॥ षड्जः स्वरः ॥

॥ ६ ॥ इमां मे अग्ने समिधमिमामुपसदं वनेः । इमा ऊ षु श्रुधी गि
॥ १ ॥ अया ते अग्ने विधेमोर्जो नपादश्वमिष्टे । एना सूक्तेन सुजात ॥ २
तं त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः । सपर्येम सपर्यवः ॥३॥ स बोधि
रिर्मघवा वसुपते वसुदावन् । युयोध्य१स्मद्द्वेषांसि ॥ ४॥ स नो वृष्टिं दिवस्परि
नो वाजमनर्वाणम् । स नः सहस्रिणीरिषः ॥ ५ ॥ ईळानायावस्यवे यविष्ठ दूत
गिरा । यजिष्ठ होतरा गहि ॥ ६ ॥ अन्तर्ह्यग्न ईयसे विद्वाञ्जन्मोभया कवे ।
तो जन्येव मित्र्यः ॥ ७ ॥ स विद्वाँ आ च पिप्रयो यक्षि चिकित्व आनुषक् ।
चास्मिन्त्सत्सि बर्हिषि ॥ ८ ॥ २७ ॥

॥ ७ ॥ १–६ सोमाहुतिर्भार्गव ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, २,
निचृद्गायत्री । ४ त्रिपाद्गायत्री । ५ विराट् पिपीलिका मध्या । ६ वि
गायत्री ॥ षड्जः स्वरः ॥

॥ ७ ॥ श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर । वसो पुरुस्पृहं रयिम् ॥
मा नो अरातिरीशत देवस्य मर्त्यस्य च । पर्षि तस्या उत द्विषः ॥ २ ॥ वि
उत त्वया वयं धारा उदन्या इव । अति गाहेमहि द्विषः ॥ ३ ॥ शुचिः पा
वन्द्योऽग्ने बृहद्वि रोचसे । त्वं घृतेभिराहुतः ॥ ४ ॥ त्वं नो असि भारताग्ने व
भिरुक्षभिः । अष्टापदीभिराहुतः ॥ ५ ॥ द्र्वन्नः सर्पिरासुतिः प्रत्नो होता वरेण्य
सहसस्पुत्रो अद्भुतः ॥ ६ ॥ २८ ॥

॥ ८ ॥ १–६ गृत्समद ऋषिः॥ अग्निर्देवता ॥ छन्दः–१ गायत्री । २ नि
पिपीलि का मध्या गायत्री । ३,५ निचृद्गायत्री । ४ विराड् गायत्री । ६ निचृ
ष्टुप् ॥ स्वरः–१–५ षड्जः । ६ गान्धारः ॥

॥ ८ ॥ वाजयन्निव नू रथान्योगाँ अग्नेरुप स्तुहि । यशस्तमस्य मीळ्हुषः ॥
यः सुनीथो ददाशुषेऽजुर्यो जरयन्नरिं चारुप्रतीक आहुतः ॥ २ ॥ य उ श्रिया

वा दोषोषसि प्रशस्यते । यस्य व्रतं न मीयते ॥ ३ ॥ आ यः स्व१र्ण भानुना
त्रो विभात्यर्चिषा । अञ्जानो अजरैरभि ॥४॥ अत्रिमनु स्वराज्यमग्निमुक्थानि
वृधुः । विश्वा अधि श्रियो दधे ॥५॥ अग्नेरिन्द्रस्य सोमस्य देवानामूतिभिर्वयम् ।
रिष्यन्तः सचेमह्यभि ष्याम पृतन्यतः ॥ ६ ॥ २६ ॥ ५ ॥

॥ ९ ॥ १–६ गृत्समद ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, ३ त्रिष्टुप् । ४
राट् त्रिष्टुप् । ५, ६ निचृत् त्रिष्टुप् । २ पङ्क्तिः ॥ स्वरः–१,३–६ धैवतः ।
पञ्चमः ॥

॥ ९ ॥ नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत्सुदक्षः । अदब्ध-
व्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः ॥ १ ॥ त्वं दूतस्त्वमु नः प-
पास्त्वं वस्य आ वृषभ प्रणेता । अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बो-
गोपाः ॥ २ ॥ विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे । यस्माद्यो-
रुदारिथा यजे तं प्र त्वे हवींषि जुहुरे समिद्धे ॥ ३ ॥ अग्ने यजस्व हविषा य-
यान्श्रुष्टी देष्णमभि गृणीहि राधः । त्वं ह्यसि रयिपती रयीणां त्वं शुक्रस्य व-
सो मनोता ॥ ४ ॥ उभयं ते न क्षीयते वसव्यं दिवेदिवे जायमानस्य दस्म ।
धि क्षुमन्तं जरितारमग्ने कृधि पतिं स्वपत्यस्य रायः ॥ ५ ॥ सैनानीकेन सु-
दत्रो अस्मे यष्टा देवाँ आयजिष्ठः स्वस्ति । अदब्धो गोपा उत नः परस्पा अग्ने
मदुत रेवद्दिदीहि ॥ ६ ॥ १ ॥

॥ १० ॥ १–६ गृत्समद ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, २, ६, विराट्
ष्टुप् । ३ त्रिष्टुप् । ४ निचृत् त्रिष्टुप् । ५ पङ्क्तिः ॥ स्वरः–१–४, ६ धैवतः ।
पञ्चमः ॥

॥ १० ॥ जोहूत्रो अग्निः प्रथमः पितेवेळस्पदे मनुषा यत्समिद्धः । श्रियं
सानो अमृतो विचेता मर्मृजेन्यः श्रवस्य१ः स वाजी ॥ १ ॥ श्रूया अग्निश्चित्र-
तुर्हवं मे विश्वाभिर्गीर्भिरमृतो विचेताः । श्यावा रथं वहतो रोहिता वोतारुषा-
चक्रे विभृत्रः ॥ २ ॥ उत्तानायामजनयन्त्सुषूतं भुवदग्निः पुरुपेशासु गर्भः । शि-
णायां चिदक्तुना महोभिरपरीवृतो वसति प्रचेताः ॥ ३ ॥ जिघर्म्यग्निं हविषा
तेन प्रतिक्षियन्तं भुवनानि विश्वा । पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभ-
दृशानं ॥ ४ ॥ आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषेत । मर्यश्रीः
स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा३ जर्भुराणः ॥ ५ ॥ ज्ञेया भागं सहसानो वरे-

ण त्वादूतासो मनुवद्वदेम । अनूनमग्निं जुह्वा वचस्या मधुपृचं धनसा जोहवी
॥ ६ ॥ २ ॥

॥ ११ ॥ १–२१ गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, ८,
१३, १९, २० पङ्क्तिः । २, ६, भुरिक् पङ्क्तिः । ३, ४, ६, ११, १२, १४,
निचृत् पङ्क्तिः । ७ विराट् पङ्क्तिः । ५, १६, १७ स्वराट् बृहती भुरिग् बृहत
१५ बृहती । २१ त्रिष्टुप् ॥ स्वरः–१–४, ६—१४, १८—२० पञ्चमः ।
१६, १७, १५ मध्यमः । २१ धैवतः ॥

॥ ११ ॥ श्रुधी हवमिन्द्र मा रिषण्यः स्याम ते दावने वसूनाम् । इमा
त्वामूर्जो वर्धयंति वसूयवः सिन्धवो न क्षरन्तः ॥ १ ॥ सृजो महीरिन्द्र या अपि
परिष्ठिता अहिना शूर पूर्वीः । अमर्त्यं चिद्दासं मन्यमानमवाभिनदुक्थैर्वावृध
॥२॥ उक्थेष्विन्नु शूर येषु चाकन्स्तोमेष्विन्द्र रुद्रियेषु च । तुभ्येदेता यासु मन्दस
प्र वायवे सिस्रते न शुभ्राः ॥३॥ शुभ्रं नु ते शुष्मं वर्धयन्तः शुभ्रं वज्रं बाह्वोर्दधान
शुभ्रस्त्वमिन्द्र वावृधानो अस्मे दासीर्विशः सूर्येण सह्याः ॥ ४ ॥ गुहा हितं
गूळ्हमप्स्वपीवृतं मायिनं क्षियन्तम् । उतो अपो द्यां तस्तभ्वांसमहन्नहिं शूर वी
ण ॥ ५ ॥ ३ ॥ स्तवा नु त इन्द्र पूर्व्या महान्युत स्तवाम नूतना कृतानि । स
वज्रं बाह्वोरुशन्तं स्तवा हरी सूर्यस्य केतू ॥ ६ ॥ हरी नु त इन्द्र वाजयन्ता
श्चुतं स्वारमस्वार्ष्टाम् । वि समना भूमिरप्रथिष्टारंस्त पर्वतश्चित्सरिष्यन् ॥ ७ ॥
पर्वतः साद्यप्रयुच्छन्त्सं मातृभिर्वावशानो अक्रान् । दूरे पारे वाणीं वर्धयन्त इ
षितां धमनिं पप्रथन्नि ॥ ८ ॥ इन्द्रो महां सिन्धुमाशयानं मायाविनं वृत्रमस्फुर
अरेजेतां रोदसी भियाने कनिक्रदतो वृष्णो अस्य वज्रात् ॥ ९ ॥ अरोरवीद्वृष
अस्य वज्रोऽमानुषं यन्मानुषो निजूर्वात् । नि मायिनो दानवस्य माया अपाद
त्पपिवान्त्सुतस्य ॥ १० ॥ ४ ॥ पिबापिबेदिन्द्र शूर सोमं मन्दन्तु त्वा मन्दि
सुतासः । पृणन्तस्ते कुक्षी वर्धयन्त्वित्था सुतः पौर इन्द्रमाव ॥ ११ ॥ त्वे इन
प्यभूम विप्रा धियं वनेम ऋतया सपन्तः । अवस्यवो धीमहि प्रशस्तिं सद्यस्ते
यो दावने स्याम ॥ १२ ॥ स्याम ते त इन्द्र ये त ऊती अवस्यव ऊर्जं वर्धयन्त
शुष्मिन्तमं यं चाकनाम देवास्मे रयिं रासि वीरवन्तम् ॥ १३ ॥ रासि क्षयं रा
मित्रमस्मे रासि शर्ध इन्द्र मारुतं नः । सजोषसो ये च मन्दसानाः प्र वाय
पान्त्यग्रणीतिम् ॥ १४ ॥ व्यन्त्विन्नु येषु मन्दसानस्तृपत्सोमं पाहि द्रह्यदिन्द्र

मान्त्सु पृत्स्वा तंरुत्रावर्धयो द्यां बृहद्भिर्कैः ॥ १५ ॥ ५ ॥ बृहन्त इन्नु ये ते
त्रोक्थेभिर्वा सुम्नमाविवासान् । स्तृणानासो बर्हिः पस्त्यावत्त्वोता इदिन्द्र वा-
ग्मन् ॥ १६ ॥ उग्रेष्विन्नु शूर मन्दसान स्त्रिकंद्रुकेषु पाहि सोममिन्द्र । प्रदो-
च्छ्मश्रुषु प्रीणानो याहि हरिभ्यां सुतस्य पीतिम् ॥ १७ ॥ धिष्वा शवः शूर
वृत्रमवाभिनद्दानुमौर्णवाभम् । अपावृणोर्ज्योतिरार्याय नि सव्यतः सादि द-
रिन्द्र ॥ १८ ॥ सनेम ये त ऊतिभिस्तरन्तो विश्वाः स्पृध आर्येण दस्यून् ।
मभ्यं तत्त्वाष्ट्रं विश्वरूपमरन्धयः साख्यस्य त्रिताय ॥ १९ ॥ अस्य सुवानस्य
दनस्त्रितस्य न्यर्बुदं वावृधानो अस्तः । अवर्तयत्सूर्यो न चक्रं भिनद्वलमिन्द्रो
ङ्गिरस्वान् ॥ २० ॥ नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
त्वां स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ २१ ॥ ६ ॥ १ ॥

॥ १२ ॥ १–१५ गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१–५, १२–१५
ष्टुप् । ६–८, १०, ११ निचृत् त्रिष्टुप् । ९ भुरिक् त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ १२ ॥ यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् । यस्य
माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥ १ ॥ यः पृथिवीं व्य-
नामदृंहद्यः पर्वतान्प्रकुपिताँ अरम्णात् । यो अन्तरिक्षं विममे वरीयो यो
मस्तभ्नात्स जनास इन्द्रः ॥ २ ॥ यो हत्वाहिमरिणात्सप्त सिन्धून्यो गा उदा-
पधा वलस्य । यो अश्मनोरन्तरग्निं जजान संवृक्समत्सु स जनास इन्द्रः ॥ ३ ॥
मा विश्वाच्यवना कृतानि यो दासं वर्णमधरं गुहाकः । श्वघ्नीव यो जिगीवां
लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॥ ४ ॥ यं स्मा पृच्छन्ति कुह सेति घोर-
माहुर्नैषो अस्तीत्येनम् । सो अर्यः पुष्टीर्विज इवामिनाति श्रदस्मै धत्त स जनास
ः ॥ ५ ॥ ७ ॥ यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य
रेः । युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास इन्द्रः ॥ ६ ॥
याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः । यः सूर्यं य
सं जजान यो अपां नेता स जनास इन्द्रः ॥ ७ ॥ यं क्रन्दसी संयती विह्व-
परेऽवर उभया अमित्राः । समानं चिद्रथमातस्थिवांसा नाना हवेते स जनास
ः ॥ ८ ॥ यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते । यो
र्वस्य प्रतिमानं बभूव यो अच्युतच्युत्स जनास इन्द्रः ॥ ९ ॥ यः शश्वतो म-
ो दधानानमन्यमानाञ्छर्वा जघान । यः शर्धते नानुददाति शृध्यां यो दस्यो-

हन्ता स जनास इन्द्रः ॥ १० ॥ ८ ॥ यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश
शरद्यन्वविन्दत् । ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन
॥ ११ ॥ यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिन्धून् । यो रौहिण
मस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥ १२ ॥ द्यावा चिदस्मै पृथिवी नम
शुष्माच्चिदस्य पर्वता भयन्ते । यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जन
इन्द्रः ॥ १३ ॥ यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः शशमानमूती । य
ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः स जनास इन्द्रः ॥ १४ ॥ यः सुन्वते पच
दुध्र आ चिद्वाजं दर्दर्षि स किलासि सत्यः । वयं त इन्द्र विश्वह प्रियासः
वीरासो विदथमा वदेम ॥ १५ ॥ ९ ॥

॥ १३ ॥ १–१३ गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१, २,
१०, ११, १२ भुरिक् त्रिष्टुप् । ७, ८ निचृत्त्रिष्टुप् । ९, १३ त्रिष्टुप् । ४
चृज्जगती । ५, ६ विराट् जगती ॥ स्वरः–१–३, ७–१३ धैवतः । ४–६ निषादः

॥ १३ ॥ ऋतुर्जनित्री तस्या अपस्परि मक्षू जात आविशद्यासु वर्धते ।
दोहना अभवत्पिप्युषी पयोऽंशोः पीयूषं प्रथमं तदुक्थ्यम् ॥ १ ॥ सध्रीमा यं
परि बिभ्रतीः पयो विश्वप्स्न्याय प्र भरन्त भोजनम् । समानो अध्वा प्रवताम
ष्यदे यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥ २ ॥ अन्वेको वदति यद्ददाति तद्रूपा
नन्तदपा एक ईयते । विश्वा एकस्य विनुदस्तितिक्षते यस्ताकृणोः प्रथमं सास
क्थ्यः ॥ ३ ॥ प्रजाभ्यः पुष्टिं विभजन्त आसते रयिमिव पृष्ठं प्रभवन्तमायते । असि
न्दंष्ट्रैः पितुरत्ति भोजनं यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥ ४ ॥ अधाकृणोः
थिवीं सन्दृशे दिवे यो धौतीनामहिहन्नारिणक्पथः । तं त्वा स्तोमेभिरुदभिर्न
जिनं देवं देवा अजनन्त्सास्युक्थ्यः ॥ ५ ॥ १० ॥ यो भोजनं च दयसे च
नमार्द्रादा शुष्कं मधुमद्दुदोहिथ । सः शेवधिं नि दधिषे विवस्वति विश्वस्यैक ईशि
सास्युक्थ्यः ॥६॥ यः पुष्पिणीश्च प्रस्वश्च धर्मणाधि दाने व्य१वनीरधारयः । यश्चास
अजनो दिद्युतो दिव उरुरूर्वाँ अभितः सास्युक्थ्यः ॥७॥ यो नार्मरं सहवसुं निहन्तवे
क्षाय च दासवेशाय चावहः । ऊर्जयन्त्या अपरिविष्टमास्यमुतैवाद्य पुरुकृत्सास्युक्थ
॥ ८ ॥ शतं वा यस्य दश साकमाद्य एकस्य श्रुष्टौ यद्ध चोदमाविथ । अर
दस्यून्त्समुनब्दभीतये सुप्राव्यो अभवः सास्युक्थ्यः ॥९॥ विश्वेदनु रोधना अ
पौंस्यं ददुरस्मै दधिरे कृत्नवे धनम् । षळस्तभ्ना विष्टिरः पञ्च सन्दृशः परि

वः सास्युक्थ्यः ॥१०॥ ११ ॥ सुप्रवाचनं तव वीर वीर्यं१ं यदेकेन क्रतुना वि-
वसु । जातूष्ठिरस्य प्र वयः सहस्वतो या चकर्थ सेन्द्र विश्वास्युक्थ्यः ॥११॥
मयः सरपसस्तराय कं तुर्वीतये च वय्याय च स्रुतिम् । नीचा सन्तमुदनयः प-
जं प्रान्धं श्रोणं श्रवयन्त्सास्युक्थ्यः ॥ १२ ॥ अस्मभ्यं तद्वसो दानाय राधः
र्थयस्व बहु ते वसव्यम् । इन्द्र यच्चित्रं श्रवस्या अनु द्यून्बृहद्वदेम विदथे सुवी-
॥ १३ ॥ १२ ॥

॥ १४ ॥ १-१२ गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः-१, ३, ४, ६, १०,
त्रिष्टुप् । २, ६, ८, निचृत् त्रिष्टुप् । ७ विराट् त्रिष्टुप् । ५ निचृत्पङ्क्तिः । ११
रिक् पङ्क्तिः ॥ स्वरः- १-४, ६-१०, १२ धैवतः । ५, ११ पञ्चमः ॥

॥ १४ ॥ अध्वर्यवो भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः । कामी
वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि ॥ १ ॥ अध्वर्यवो यो अपो
वांसं वृत्रं जघानाशन्येव वृक्षम् । तस्मा एतं भरत तद्वशायँ एष इन्द्रो अर्हति
तिमस्य ॥ २ ॥ अध्वर्यवो यो दृभीकं जघान यो गा उदाजदप हि वलं वः ।
मा एतमन्तरिक्षे न वातमिन्द्रं सोमैरोर्णुत जूर्न वस्त्रैः ॥ ३ ॥ अध्वर्यवो य उ-
जघान नव चख्वांसं नवतिं च बाहून् । यो अर्बुदमव नीचा बबाधे तमिन्द्रं सोमस्य
हिनोत ॥ ४ ॥ अध्वर्यवो यः स्वश्नं जघान यः शुष्णमशुषं यो व्यंसम् । यः
नमुचिं यो रुधिक्रां तस्मा इन्द्रायान्धसो जुहोत ॥ ५ ॥ अध्वर्यवो यः शतं
म्बरस्य पुरो बिभेदाश्मनेव पूर्वीः । यो वर्चिनः शतमिन्द्रः सहस्रमपावपद्भरता सो-
स्मै ॥ ६ ॥ १३ ॥ अध्वर्यवो यः शतमा सहस्रं भूम्या उपस्थेऽवपज्जघन्वान् ।
संस्यायोरतिथिग्वस्य वीरान्न्यवृणग्भरता सोममस्मै ॥७॥ अध्वर्यवो यन्नरः का-
ध्वे श्रुष्टी वहन्तो नशथा तदिन्द्रे । गभस्तिपूतं भरत श्रुतायेन्द्राय सोमं य-
वो जुहोत ॥ ८ ॥ अध्वर्यवः कर्तना श्रुष्टिमस्मै वने निपूतं वन उन्नयध्वम् ।
णो हस्त्यमभि वावशे व इन्द्राय सोमं मदिरं जुहोत ॥ ९ ॥ अध्वर्यवः पयसो-
था गोः सोमेभिरीं पृणता भोजमिन्द्रम् । वेदाहमस्य निभृतं म एतद्दित्सन्तं भू-
यजतश्चिकेत ॥ १० ॥ अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य
जा । तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु ॥ ११ ॥ अस्मभ्यं
सो दानाय राधः समर्थयस्व बहु ते वसव्यम् । इन्द्र यच्चित्रं श्रवस्या अनु द्यू-
हद्वदेम विदथे सुवीराः ॥ १२ ॥ १४ ॥

॥ १५ ॥ १—१० गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१ भुरिक् पङ्क्तिः। ७ स्वराट् पङ्क्तिः। २, ४, ५, ६, ९, १० त्रिष्टुप्। ३ निचृत् त्रिष्टुप्। ८ विराट् त्रिष्टुप् ॥ स्वरः—१, ७ पञ्चमः। २—६, ८—१० धैवतः ॥

॥ १५ ॥ प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्। त्रिकद्रुकेष्वपिबत्सुतस्यास्य मदे अहिमिन्द्रो जघान ॥ १ ॥ अवंशे द्यामस्तभायद्बृहन्तमा रोदसी अपृणदन्तरिक्षम्। स धारयत्पृथिवीं पप्रथच्च सोमस्य ता मद इन्द्रश्चकार ॥ २ ॥ सद्मेव प्राचो वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम्। वृथासृजत्पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार ॥ ३ ॥ स प्रवोळ्हॄन्परिगत्या दभीतेर्विश्वमधागायुधमिद्धे अग्नौ। सं गोभिरश्वैरसृजद्रथेभिः सोमस्य ता मद इन्द्रश्चकार ॥ ४ ॥ स ईं महीं धुनिमेतोररम्णात्सो अस्नातॄनपारयत्स्वस्ति। त उत्स्नाय रयिमभि प्र तस्थुः सोमस्य ता मद इन्द्रश्चकार ॥ ५ ॥ १५ ॥ सोदञ्चं सिन्धुमरिणान्महित्वा वज्रेणान उषसः सं पिपेष। अजवसो जविनीभिर्विवृश्चन्त्सोमस्य ता मद इन्द्रश्चकार ॥ ६ ॥ स विद्वाँ अपगोहं कनीनामाविर्भवन्नुदतिष्ठत्परावृक्। प्रति श्रोणः स्थाद्व्य१नगचष्ट सोमस्य ता मद इन्द्रश्चकार ॥ ७ ॥ भिनद्वलमङ्गिरोभिर्गृणानो वि पर्वतस्य दृंहितान्यैरत्। रिणग्रोधांसि कृत्रिमाण्येषां सोमस्य ता मद इन्द्रश्चकार ॥ ८ ॥ स्वप्नेनाभ्युप्या चुमुरिं धुनिं च जघन्थ दस्युं प्र दभीतिमावः। रम्भी चिदत्र विविदे हिरण्यं सोमस्य ता मद इन्द्रश्चकार ॥ ९ ॥ नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी। शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ १० ॥ १६ ॥

॥ १६ ॥ १—९ गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१, ७ जगती। ३ विराट् जगती। ४, ५, ६, ८ निचृज्जगती च। २ भुरिक्त्रिष्टुप्। ९ त्रिष्टुप् ॥ स्वरः—१, ३—८ निषादः। २, ९ धैवतः ॥

॥ १६ ॥ प्र वः सतां ज्येष्ठतमाय सुष्टुतिमग्नाविव समिधाने हविर्भरे। इन्द्रमजुर्यं जरयन्तमुक्षितं सनाद्युवानमवसे हवामहे ॥ १ ॥ यस्मादिन्द्राद्बृहतः किं चनेमृते विश्वान्यस्मिन्त्सम्भृताधि वीर्या। जठरे सोमं तन्वी३सहो महो हस्ते वज्रं भरति शीर्षणि क्रतुम् ॥ २ ॥ न क्षोणीभ्यां परिभ्वे त इन्द्रियं न समुद्रैः पर्वतैरिन्द्र ते रथः। न ते वज्रमन्वश्नोति कश्चन यदाशुभिः पतसि योजना पुरु ॥ ३ ॥ विश्वे ह्यस्मै यजताय धृष्णवे क्रतुं भरन्ति वृषभाय सश्चते। वृषा यज

षां विदुष्टरः पिबेन्द्र सोमं वृषभेण भानुना ॥ ४ ॥ वृष्णः कोशः पवते मध्व
मिर्वृषभान्नाय वृषभाय पातवे । वृषणाध्वर्यू वृषभासो अद्रयो वृषणं सोमं वृष-
य सुष्वति ॥ ५ ॥ १७ ॥ वृषा ते वज्र उत ते वृषा रथो वृषणा हरी वृषभा-
युधा । वृष्णो मदस्य वृषभ त्वमीशिष इन्द्र सोमस्य वृषभस्य तृप्णुहि ॥ ६ ॥
ते नावं न समने वचस्युवं ब्रह्मणा यामि सवनेषु दाधृषिः । कुविन्नो अस्य व-
निबोधिषदिन्द्रमुत्सं न वसुनः सिचामहे ॥ ७ ॥ पुरा सम्बाधादभ्या ववृ-
नो धेनुर्न वत्सं यवसस्य पिप्युषी । सकृत्सु ते सुमतिभिः शतक्रतो सं पत्नी-
र्न वृषणो नसीमहि ॥ ८ ॥ नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा
नी । शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ ९ ॥ १८ ॥

॥ १७ ॥ १-९ गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१, ५, ६ वि-
ट् जगती । २, ४ निचृज्जगती । ३, ७ भुरिक् त्रिष्टुप् । ९ त्रिष्टुप् । ८ नि-
पङ्क्तिः ॥ स्वरः—१, २, ४-६, निषादः । ३, ७, ९, धैवतः । ८ पञ्चमः ॥

॥ १७ ॥ तदस्मै नव्यमङ्गिरस्वदर्चत शुष्मा यदस्य प्रत्नथोदीरते । विश्वा य-
त्रा सहसा परीवृता मदे सोमस्य दंहितान्यैरयत् ॥ १ ॥ स भूतु यो ह प्रथ-
य धायस ओजो मिमानो महिमानमातिरत् । शूरो यो युत्सु तन्वं परिव्यत शी-
ण द्यां महिना प्रत्यमुञ्चत ॥ २ ॥ अधाकृणोः प्रथमं वीर्यं महद्यदस्याग्रे ब्रह्म-
शुष्ममैरयः । रथेष्ठेन हर्यश्वेन विच्युताः प्र जीरयः सिस्रते सध्र्यक् पृथक्
३ ॥ अधा यो विश्वा भुवनाभि मज्मनेशानकृत्प्रवया अभ्यवर्धत । आद्रोदसी
तिषा वह्निरातनोत्सीव्यन्तमांसि दुधिता समव्ययत् ॥ ४ ॥ स प्राचीनान्प-
दंहदोजसाधराचीनमकृणोदपामपः । अधारयत्पृथिवीं विश्वधायसमस्तभ्ना-
यया द्यामवस्रसः ॥ ५ ॥ १९ ॥ सास्मा अरं बाहुभ्यां यं पिताकृणोद्विश्व-
दा जनुषो वेदसस्परि । येना पृथिव्यां नि क्रिविं शयध्यै वज्रेण हत्व्यवृण-
विष्वणिः ॥ ६ ॥ अमाजूरिव पित्रोः सचा सती समानादा सदसस्त्वामिये भ-
। कृधि प्रकेतमुप मास्या भर दद्धि भागं तन्वो येन मामहः ॥ ७ ॥ भोजं त्वा-
न्द्र वयं हुवेम ददिष्ट्वमिन्द्रापांसि वाजान् । अविड्ढीन्द्र चित्रया न ऊती कृधि
न्निन्द्र वस्यसो नः ॥ ८ ॥ नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा
नी । शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ ९ ॥ २० ॥

॥ १८ ॥ १-९ गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१ पङ्क्तिः । ४,

८ भुरिक् पङ्क्तिः । ५, ६ स्वराट् पङ्क्तिः । ७ निचृत् पङ्क्तिः । २, ३, ९ त्रिष्टुप्
स्वरः-१, ४-८ पञ्चमः । २, ३, ९ धैवतः ॥

॥ १८ ॥ प्राता रथो नवो योजि सस्निश्चतुर्युगस्त्रिकशः सप्तरश्मिः । द
रित्रो मनुष्यः स्वर्षाः स इष्टिभिर्मतिभी रंह्यो भूत् ॥ १ ॥ सास्मा अरं प्रथमं
द्वितीयमुतो तृतीयं मनुषः स होता । अन्यस्या गर्भमन्य ऊ जनन्त सो अन्ये
सचते जेन्यो वृषा ॥ २ ॥ हरी नु कं रथ इन्द्रस्य योजमायै सूक्तेन वचसा नवे
मो षु त्वामत्र बहवो हि विप्रा नि रीरमन्यजमानासो अन्ये ॥ ३ ॥ आ द्वा
हरिभ्यामिन्द्र याह्या चतुर्भिरा षड्भिर्हूयमानः । आष्टाभिर्दशभिः सोमपेयमयं सु
सुमख मा मृधस्कः ॥ ४ ॥ आ विंशत्या त्रिंशता याह्यर्वाङा चत्वारिंशता ह
भिर्युजानः । आ पञ्चाशता सुरथेभिरिन्द्रा षष्ट्या सप्तत्या सोमपेयम् ॥५॥ २
आशीत्या नवत्या याह्यर्वाङा शतेन हरिभिरुह्यमानः । अयं हि ते शुनहोत्रेषु स
इन्द्र त्वाया परिषिक्तो मदाय ॥ ६ ॥ मम ब्रह्मेन्द्र याह्यच्छा विश्वा हरी
धिष्वा रथस्य । पुरुत्रा हि विहव्यो बभूथास्मिञ्छूर सवने मादयस्व ॥ ७ ॥ न
इन्द्रेण सख्यं वि योषदस्मभ्यमस्य दक्षिणा दुहीत । उप ज्येष्ठे वरूथे गभ
प्रायेप्राये जिगीवांसः स्याम ॥ ८ ॥ नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र
क्षिणा मघोनी । शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवी
॥ ९ ॥ २२ ॥

॥ १९ ॥ १—९ गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः—१, २,
८ विराट् त्रिष्टुप् । ९ त्रिष्टुप् । ३ पङ्क्तिः । ५, ७ भुरिक् पङ्क्तिः । ४ निचृत् पङ्क्ति
स्वरः—१, २, ६, ८, ९ धैवतः । ३—५, ७ पञ्चमः ॥

॥ १९ ॥ अपाय्यस्यान्धसो मदाय मनीषिणः सुवानस्य प्रयसः । य
न्निन्द्रः प्रदिवि वावृधान ओको दधे ब्रह्मण्यन्तश्च नरः ॥ १ ॥ अस्य मन्द
मध्वो वज्रहस्तोऽहिमिन्द्रो अर्णोवृतं वि वृश्चत् । प्र यद्वयो न स्वसराण्यच्छा
यांसि च नदीनां चक्रमन्त ॥ २ ॥ स माहिन इन्द्रो अर्णो अपां प्रैरयदहिहा
समुद्रम् । अजनयत्सूर्यं विदद्गा अक्तुनाह्नां वयुनानि साधत् ॥ ३ ॥ सो अप्रती
मनवे पुरूणीन्द्रो दाशद्दाशुषे हन्ति वृत्रम् । सद्यो यो नृभ्यो अतसाय्यो भूत्प
धानेभ्यः सूर्यस्य सातौ ॥ ४ ॥ स सुन्वत इन्द्रः सूर्यमा देवो रिणङ्मर्त्य
स्तवान् । आ यद्रयिं गुहदवद्यमस्मै भरदंशं नैतशो दशस्यन् ॥ ५ ॥ २३

न्धयत्स॒दिवः सार॑थये॒ शुष्ण॑म॒शुषं॒ कुय॑वं॒ कुत्सा॑य । दिवो॑दासाय नव॒तिं च॒ नवे-
पुरो॒ व्यै॑र॒च्छम्ब॑रस्य ॥ ६ ॥ ए॒वा त॑ इन्द्रो॒चथ॑महेम श्र॒व॒स्या न त्मना॑ वा॒जय॑न्तः ।
याम॒ तत्सा॑प्तमाशुषा॒णा न॒नमो॒ वध॒रदे॑वस्य पी॒योः ॥ ७ ॥ ए॒वा ते॑ गृत्सम॒दाः
मन्मा॑व॒स्यवो॒ न व॒युना॑नि तक्षुः । ब्र॒ह्म॒ण्यन्त॑ इन्द्र ते॒ नवी॑य॒ इष॒मूर्जं॑ सुक्षि॒तिं
म्नमश्युः ॥ ८ ॥ नूनं सा ते॒ प्रति॒ वरं॑ जरि॒त्रे दु॑ही॒यदि॑न्द्र दक्षिणा म॒घोनी॑ ।
क्षा स्तोतृभ्यो॒ माति॒ धग्भगो॑ नो बृहद्व॑देम वि॒दथे॑ सु॒वीरा॑ः ॥ ९ ॥ २४ ॥

॥ २० ॥ १–९ गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, ६, ८ विराट्
ष्टुप् । ९ त्रिष्टुप् । २ बृहती । ३ पङ्क्तिः । ४, ५, ७ भुरिक् पङ्क्तिः ॥ स्वरः–
६, ८, ९ धैवतः । २ मध्यमः । ३–५, ७ पञ्चमः ॥

॥ २० ॥ व॒यं ते॑ वय॑ इन्द्र वि॒द्धि षु॒णः प्र भ॑रामहे वाज॒युर्न रथ॑म् । वि॒प॒न्यवो॒
ध्य॑तो मनी॒षा सु॒म्नमिय॑क्षन्त॒स्त्वाव॑तो॒ नॄन् ॥ १ ॥ त्वं न॑ इन्द्र॒ त्वाभि॑रू॒ती त्वा॑य॒तो
भिष्टि॒पासि॒ जना॑न् । त्वमि॒नो दा॒शुषो॑ वरू॒तेत्थाधी॑र॒भि यो नक्ष॑ति त्वा ॥ २ ॥ स
युवेन्द्रो॑ जो॒हूत्रः॒ सखा॑ शि॒वो न॒राम॑स्तु पा॒ता । यः शंस॑न्तं॒ यः श॑शमा॒नमू॒ती पच॑न्तं
स्तु॒वन्तं॑ च प्र॒णेष॑त् ॥ ३ ॥ तमु॑ स्तुष॒ इन्द्रं॒ तं गृ॑णीषे॒ यस्मि॒न्पुरा॑ वावृ॒धुः
श॒दुश्च॑ । स वस्वः॒ काम॑ं पीपरदिया॒नो ब्र॑ह्मण्य॒तो नूत॑नस्या॒योः ॥ ४ ॥ सो
ङ्गि॑रसामु॒चथा॑ जुजु॒ष्वान्ब्रह्मा॑ तूतो॒दिन्द्रो॑ गा॒तुमि॒ष्णन् । मु॒ष्णन्नु॒षसः॒ सूर्ये॑ण
वानश्व॑स्य चिच्छिश्नथत्पू॒र्व्याणि॑ ॥ ५ ॥ २५ ॥ स ह॑ श्रु॒त इन्द्रो॒ नाम॑ दे॒व ऊ॒र्ध्वो
न्मनु॑षे द॒स्मत॑मः । अव॑ प्रि॒यम॑र्श॒सा॒नस्य॑ सा॒ह्वाञ्छिरो॑ भरद्दा॒सस्य॑ स्व॒धावा॑न्
६ ॥ स वृ॑त्र॒हेन्द्रः॑ कृ॒ष्णयो॑नीः पुरन्द॒रो दासी॑रैरय॒द्वि । अज॑नय॒न्मन॑वे॒ क्षाम॒-
च॑ स॒त्रा शंस॑ं यज॑मानस्य तूतोत् ॥ ७ ॥ तस्मै॑ तव॒स्य१॒॑मनु॑ दायि स॒त्रेन्द्रा॑य दे॒-
भि॒रर्ण॑सातौ । प्रति॒ यद॑स्य॒ वज्रं॑ बा॒ह्वोर्धुर्ह॒त्वी दस्यू॒न्पुर॒ आय॑सी॒र्नि ता॑रीत् ॥ ८ ॥
सा ते॒ प्रति॒ वरं॑ जरि॒त्रे दु॑ही॒यदि॑न्द्र दक्षि॒णा म॒घोनी॑ । शिक्षा॑ स्तो॒तृभ्यो॒ माति॑
भगो॑ नो बृहद्व॑देम वि॒दथे॑ सु॒वीरा॑ः ॥ ९ ॥ २६ ॥

॥ २१ ॥ १–६ गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१, २ स्वराट्
ष्टुप् । ३, ६ त्रिष्टुप् । ४ विराट् जगती । ५ निचृज्जगती ॥ स्वरः–१–३, ६
तः । ४, ५ निषादः ॥

॥ २१ ॥ वि॒श्व॒जिते॑ धन॒जिते॑ स्व॒र्जिते॑ सत्रा॒जिते॑ नृ॒जित॑ उर्वरा॒जिते॑ । अ॒श्व॒-

जितें गोजितें अब्जितें भरेन्द्राय सोमं यजताय हर्यतम् ॥ १ ॥ अभिभुवेऽभि
ङ्गाय वन्वतेऽषाळ्हाय सहमानाय वेधसे । तुविग्रये वह्नये दुष्टरीतवे सत्रासाहे न
इन्द्राय वोचत ॥ २ ॥ सत्रासाहो जनभक्षो जनंसहश्च्यवनो युध्मो अनु जोष
क्षितः । वृतञ्चयः सहुरिर्विक्ष्वारित इन्द्रस्य वोचं प्र कृतानि वीर्या ॥ ३ ॥ अन
नुदो वृषभो दोधतो वधो गम्भीर ऋष्वो असमष्टकाव्यः । रध्रचोदः श्नथ
वीळितस्पृथुरिन्द्रः सुयज्ञ उषस स्वर्जनत् ॥ ४ ॥ यज्ञेन गातुमप्तुरो विविद्रिरे धि
हिन्वाना उशिजो मनीषिणः । अभिस्वरा निषदा गा अवस्यव इन्द्रे हिन्वा
द्रविणान्याशत ॥५॥ इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे
पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम् ॥ ६ ॥ २७ ॥

॥ २२ ॥ १–४ गृत्समद ऋषिः ॥ इन्द्रो देवता ॥ छन्दः–१ अष्टिः । २
चृदतिशक्वरी । ४ भुरिगतिशक्वरी । ३ स्वराट् शक्वरी ॥ स्वरः–१ मध्यमः ।
४ पञ्चमः । ३ धैवतः ॥

॥ २२ ॥ त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत्सोममपिबद्विष्णु
सुतं यथावशत् । स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं सश्चद्देवो देवं सत्यमि
सत्य इन्दुः ॥ १ ॥ अध त्विषीमाँ अभ्योजसा क्रिविं युधाभवदा रोदसी अ
णादस्य मज्मना प्र वावृधे । अधत्तान्यं जठरे प्रेमरिच्यत सैनं सश्चद्देवो देवं
त्यमिन्द्रं सत्य इन्दुः ॥ २ ॥ साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृ
वीर्यैः सासहिर्मृधो विचर्षणिः । दाता राधः स्तुवते काम्यं वसु सैनं सश्चद्देवो
सत्यमिन्द्रं सत्य इन्दुः ॥ ३ ॥ तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवा
कृतम् । यद्देवस्य शवसा प्रारिणा असुं रिणन्नपः । भुवद्विश्वमभ्यादेवमोजसा
दादूर्जं शतक्रतुर्विदादिषम् ॥ ४ ॥ २८ ॥ २ ॥

॥ २३ ॥ १–१९ गृत्समद ऋषि ॥ देवताः–१, ५, ९, ११, १७,
ब्रह्मणस्पतिः । २–४, ६–८, १०, १२–१६, १८ बृहस्पतिश्च ॥ छन्दः–१,
५, १०, ११, १२ जगती । २, ७, ८, ९, १३, १४, विराट् जगती । ३,
१६, १८ निचृज्जगती । १५, १७ भुरिक् त्रिष्टुप् । १९ निचृत् त्रिष्टुप् ॥ स्वरः–
१४, १६, १८ निषादः । १५, १७, १९ धैवतः ॥

॥ २३ ॥ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।

राजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ १ ॥ देवा-
त्ते असुर्ये प्रचेतसो बृहस्पते युज्ञियं भागमानशुः । उस्रा इव सूर्यो ज्योतिषा म-
विश्वेषामिज्जनिता ब्रह्मणामसि ॥ २ ॥ आ विबाध्या परिरापस्तमांसि च ज्यो-
भन्तं रथमृतस्य तिष्ठसि । बृहस्पते भीममंमित्रदम्भनं रक्षोहणं गोत्रभिदं स्व-
र्दम् ॥ ३ ॥ सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवत् ।
ब्रह्मद्विषस्तपनो मन्युमीरसि बृहस्पते महि तत्ते महित्वनम् ॥ ४ ॥ न तमंहो न दु-
तं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः । विश्वा इदस्माद्ध्वरसो वि बाधसे यं
गोपा रक्षसि ब्रह्मणस्पते ॥ ५ ॥ २९ ॥ त्वं नो गोपाः पथिकृद्विचक्षणस्तव
ार्य मतिभिर्जरामहे । बृहस्पते यो नो अभि ह्वरो दधे स्वा तं मर्मर्तु दुच्छुना ह-
वती ॥ ६ ॥ उत वा यो नो मर्चयादनागसोऽरातीवा मर्तः सानुको वृकः । बृ-
पते अप तं वर्तया पथः सुगं नो अस्यै देववीतये कृधि ॥ ७ ॥ त्रातारं त्वा
नां हवामहेऽवस्पर्तरधिवक्तारमस्मयुम् । बृहस्पते देवनिदो नि बर्हय मा दुरेवा उ-
सुम्नमुन्नशन् ॥ ८ ॥ त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या द-
महि । या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ॥ ९ ॥
या वयमुत्तमं धीमहे वयो बृहस्पते पप्रिणा सस्निना युजा । मा नो दुःशंसो
भिदिप्सुरीशत प्र सुशंसा मतिभिस्तारिषीमहि ॥ १० ॥ ३० ॥ अनानुदो वृष-
जग्मिराहवं निष्टप्ता शत्रुं पृतनासु सासहिः । असि सत्य ऋणया ब्रह्मण-
उग्रस्य चिद्दमिता वीळुहर्षिणः ॥ ११ ॥ अदेवेन मनसा यो रिषण्यति शा-
मुग्रो मन्यमानो जिघांसति । बृहस्पते मा प्रणक्तस्य नो वधो नि कर्म मन्युं दु-
स्य शर्धतः ॥ १२ ॥ भरेषु हव्यो नमसोपसद्यो गन्ता वाजेषु सनिता धनंधनम् ।
वा इदर्यो अभिदिप्स्वो३मृधो बृहस्पतिर्वि ववर्हा रथाँ इव ॥ १३ ॥ तेजिष्ठया
नी रक्षसस्तप ये त्वा निदे दधिरे दृष्टवीर्यम् । आविस्तत्कृष्व यदसत्त उक्थ्यं१ बृ-
ते वि परिरापो अर्दय ॥ १४ ॥ बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्र-
जनेषु । यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ १५ ॥ ३१ ॥
नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः । आ देवा-
मोहंते वि वयो हृदि बृहस्पते न परः साम्नो विदुः ॥ १६ ॥ विश्वेभ्यो हि त्वा
नेभ्यस्परि त्वष्टाजनत्साम्नःसाम्नः कविः । स ऋणचिदृणया ब्रह्मणस्पति-
हन्ता मह ऋतस्य धर्तरि ॥ १७ ॥ तव श्रिये व्यजिहीत पर्वतो गवां गोत्र-
सृजो यदङ्गिरः । इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम्

॥ १८ ॥ ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व । विश्वं तद्भ
यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ १९ ॥ ३२ ॥ ६ ॥

॥ २४ ॥ १—१६ गृत्समद ऋषिः ॥ १—११, १३—१६ ब्रह्मण
स्पतिः । १२ ब्रह्मणस्पतिरिन्द्रश्च देवते ॥ छन्दः—१, ७, ९, ११ निचृज्ज
ती । १३ भुरिक् जगती । ६, ८, १४ जगती । १० स्वराड् जगती । २, ३ त्रि
ष्टुप् । ४, ५ स्वराट् त्रिष्टुप् । १२, १६ निचृत् त्रिष्टुप् । १५ भुरिक् त्रिष्टुप्
स्वरः—१, ४, ६—११, १३, १४ निषादः । २, ३, ५, १२, १५, १६ धैवतः

॥ २४ ॥ सेमामविड्ढि प्रभृतिं य ईशिषेऽया विधेम नवया महा गिरा । य
नो मीढ्वान्स्तवते सखा तव बृहस्पते सीषधः सोत नो मतिम् ॥ १ ॥ यो नन्त्व
न्यनमन्न्योजसोतादर्दर्मन्युना शम्बराणि वि । प्राच्यावयदच्युता ब्रह्मणस्पति
चाविशद्वसुमन्तं वि पर्वतम् ॥ २ ॥ तद्देवानां देवतमाय कर्त्वमश्रथ्नन्दृळ्हाव्रद
वीळिता । उद्गा आजदभिनद्ब्रह्मणा वलमगूहत्तमो व्यचक्षयत्स्वः ॥ ३ ॥
श्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् । तमेव विश्वे पपिरे स्वर्दृ
बहु साकं सिसिचुरुत्समुद्रिणम् ॥ ४ ॥ सना ता का चिद्भुवना भवीत्वा मा
शरद्भिर्दुरो वरन्त वः । अयतन्ता चरतो अन्यदन्यदिद्या चकार वयुना ब्रह्म
स्पतिः ॥ ५ ॥ १ ॥ अभिनक्षन्तो अभि ये तमानशुर्निधिं पणीनां परमं
हितम् । ते विद्वांसः प्रतिचक्ष्यानृता पुनर्यत उ आयन्तदुदीयुराविशम् ॥ ६
ऋतावानः प्रतिचक्ष्यानृता पुनरात आ तस्थुः कवयो महस्पथः । ते बाहुभ्यां
मितमग्निमश्मनि नकिः षो अस्त्यरणो जहुर्हि तम् ॥ ७ ॥ ऋतज्येन क्षि
ब्रह्मणस्पतिर्यत्र वष्टि प्र तदश्नोति धन्वना । तस्य साध्वीरिषवो याभिरस्यति
चक्षसो दृशये कर्णयोनयः ॥ ८ ॥ स संनयः स विनयः पुरोहितः स सुष्टुतः
युधि ब्रह्मणस्पतिः । चाक्ष्मो यद्वाजं भरते मती धनादित्सूर्यस्तपति तप्यतु
॥ ९ ॥ विभु प्रभु प्रथमं मेहनावतो बृहस्पतेः सुविदत्राणि राध्या । इमा सात
वेन्यस्य वाजिनो येन जना उभये भुञ्जते विशः ॥ १० ॥ २ ॥ योऽवरे वृ
विश्वथा विभुर्महामु रण्वः शवसा ववक्षिथ । स देवो देवान्प्रति पप्रथे पृथु वि
ता परिभूर्ब्रह्मणस्पतिः ॥ ११ ॥ विश्वं सत्यं मघवाना युवोरिदापश्चन प्र मि
न्ति व्रतं वाम् । अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम् ॥ १
उताशिष्ठा अनु शृण्वन्ति वह्नयः सभेयो विप्रो भरते मती धना । वीळुद्वेषा

ऋणमाददिः स ह वाजी संमिथे ब्रह्मणस्पतिः ॥ १३ ॥ ब्रह्मणस्पतेरभवद्य-
शं सत्यो मन्युर्महि कर्मा करिष्यतः । यो गा उदाजत्स दिवे वि चाभजन्म-
रीतिः शवसासरत्पृथक् ॥ १४ ॥ ब्रह्मणस्पते सुयमस्य विश्वहा रायः स्याम
यो३वयस्वतः । वीरेषु वीराँ उप पृङ्धि नस्त्वं यदीशानो ब्रह्मणा वेषि मे हवम्
१५ ॥ ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व । विश्वं तद्भद्रं
वन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ १६ ॥ ३ ॥

॥ २५ ॥ १–५ गृत्समद ऋषिः ॥ ब्रह्मणस्पतिर्देवता ॥ छन्दः–१, २ जगती ।
निचृज्जगती । ४, ५ विराड् जगती ॥ निषादः स्वरः ॥

॥ २५ ॥ इन्धानो अग्निं वनवद्वनुष्यतः कृतब्रह्मा शूशुवद्रातहव्य इत् । जा-
जातमति स प्र सर्स्रते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ १ ॥ वीरेभिर्वीरान्वं-
द्वनुष्यतो गोभी रयिं पप्रथद्बोधति त्मना । तोकं च तस्य तनयं च वर्धते यंयं
कृणुते ब्रह्मणस्पतिः ॥ २ ॥ सिन्धुर्न क्षोदः शिमीवाँ ऋघायतो वृषेव वध्री-
वृष्ट्योजसा । अग्नेरिव प्रसितिर्नाह वर्तवे यंयं युजं कृणुते ब्रह्मणस्पतिः
३ ॥ तस्मा अर्षन्ति दिव्या असश्चतः स सत्वभिः प्रथमो गोषु गच्छति ।
निभृष्टतविषिर्हन्त्योजसा यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ४ ॥ तस्मा इद्विश्वे
यन्त सिन्धवोऽच्छिद्रा शर्म दधिरे पुरूणि । देवानां सुम्ने सुभगः स एधते
युजं कृणुते ब्रह्मणस्पतिः ॥ ५ ॥ ४ ॥

॥ २६ ॥ १–४ गृत्समद ऋषिः ॥ ब्रह्मणस्पतिर्देवता ॥ छन्दः–१, ३
ती । २, ४ निचृज्जगती ॥ निषादः स्वरः ॥

॥ २६ ॥ ऋजुरिच्छंसो वनवद्वनुष्यतो देवयन्निददेवयन्तमभ्यसत् । सुप्रावी-
नवत्पृत्सु दुष्टरं यज्वेदयज्योर्वि भजाति भोजनम् ॥ १ ॥ यजस्व वीर प्र
हे मनायतो भद्रं मनः कृणुष्व वृत्रतूर्ये । हविष्कृणुष्व सुभगो यथाससि ब्रह्म-
पतेरव आ वृणीमहे ॥ २ ॥ स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते
नृभिः । देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥ ३ ॥
अस्मै हव्यैर्घृतवद्भिरविधत्प्र तं प्राचा नयति ब्रह्मणस्पतिः । उरुष्यतीमंहसो
ती रिषो३ंहोश्चिदस्मा उरुचक्रिरद्भुतः ॥ ४ ॥ ५ ॥

॥ २७ ॥ १–१७ कूर्मो गार्त्समदो गृत्समदो वा ऋषिः ॥ आदित्यो देवता ॥

छन्दः—१, ३, ६, १३, १४, १५ निचृत्त्रिष्टुप् । २, ४, ५, ८, १२, १७ त्रिष्टुप् । ११, १६ विराट् त्रिष्टुप् । ७ भुरिक् पङ्क्तिः । ६, १० स्वराट् पङ्क्तिः । स्वरः—१–६, ८, ११–१७ धैवतः । ७, ६, १० पञ्चमः ॥

॥ २७ ॥ इमा गिरं आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि । शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥ १ ॥ इमं स्तोमं सक्रतवो मे अद्य मित्रो अर्यमा वरुणो जुषन्त । आदित्यासः शुचयो धारपूता अवृजिना अनवद्या अरिष्टाः ॥ २ ॥ त आदित्यास उरवो गभीरा अदब्धासो दिप्सन्तो भूर्यक्षाः । अन्तः पश्यन्ति वृजिनोत साधु सर्वं राजभ्यः परमा चिदन्ति ॥ ३ ॥ धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः । दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानि ॥ ४ ॥ विद्यामादित्या अवसो वो अस्य यदर्यमन्भय आ चिन्मयोभु । युष्माकं मित्रावरुणा प्रणीतौ परि श्वभ्रेव दुरितानि वृज्याम् ॥ ५ ॥ ६ ॥ सुगो हि वो अर्यमन्मित्र पन्था अनृक्षरो वरुण साधुरस्ति । तेनादित्या अधि वोचता नो यच्छता नो दुष्परिहन्तु शर्म ॥ ६ ॥ पिपर्तु नो अदिती राजपुत्राति द्वेषांस्यर्यमा सुगेभिः । बृहन्मित्रस्य वरुणस्य शर्मोप स्याम पुरुवीरा अरिष्टाः ॥ ७ ॥ तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्त्रीणि व्रता विदथे अन्तरेषाम् । ऋतेनादित्या महि वो महित्वं तदर्यमन्वरुण मित्र चारु ॥ ८ ॥ त्री रोचना दिव्या धारयन्त हिरण्ययाः शुचयो धारपूताः । अस्वप्नजो अनिमिषा अदब्धा उरुशंसा ऋजवे मर्त्याय ॥ ९ ॥ त्वं विश्वेषां वरुणासि राजा ये च देवा असुर ये च मर्ताः । शतं नो रास्व शरदो विचक्षेऽश्यामायूंषि सुधितानि पूर्वा ॥ १० ॥ ७ ॥ न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत पश्चा । पाक्या चिद्वसवो धीर्या चिद्युष्मानीतो अभयं ज्योतिरश्याम् ॥ ११ ॥ यो राजभ्य ऋतनिभ्यो ददाश यं वर्धयन्ति पुष्टयश्च नित्याः । स रेवान्याति प्रथमो रथेन वसुदावा विदथेषु प्रशस्तः ॥ १२ ॥ शुचिरपः सूयवसा अदब्ध उप क्षेति वृद्धवयाः सुवीरः । नकिष्टं घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥ १३ ॥ अदिते मित्र वरुणोत मृळ यद्वो वयं चकृमा कच्चिदागः । उर्वश्यामभयं ज्योतिरिन्द्र मा नो दीर्घा अभि नशन्तमिस्राः ॥ १४ ॥ उभे अस्मै पीपयतः समीची दिवो वृष्टिं सुभगो नाम पुष्यन् । उभा क्षयावाजयन्याति पृत्सूभावर्धौ भवतः साधू अस्मै ॥ १५ ॥ या वो माया अभिद्रुहे यजत्रा पाशा आदित्या रिपवे विचृत्ताः । अश्वीव ताँ अति येषं रथेनारिष्टा उरावा शर्मन्त्स्याम

१६ ॥ माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः । मा रायो
जन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥ १७ ॥ ८ ॥

॥ २८ ॥ १–११ कूर्मो गार्त्समदो वा ऋषिः ॥ वरुणो देवता ॥ छन्दः–
३, ६, ४ निचृत् त्रिष्टुप् । ५, ७, ११ त्रिष्टुप् । ८ विराट् त्रिष्टुप् । ९ भुरिक्
ष्टुप् । २, १० भुरिक् पङ्क्तिः ॥ स्वरः–१, ३–९, ११ धैवतः । २, १० पञ्चमः ॥

॥ २८ ॥ इदं कवेरादित्यस्य स्वराजो विश्वानि सान्त्यभ्यस्तु मह्ना । अति
मन्द्रो यजथाय देवः सुकीर्तिं भिक्षे वरुणस्य भूरेः ॥ १ ॥ तव व्रते सुभगासः
याम स्वाध्यो वरुण तुष्टुवांसः । उपायन उषसां गोमतीनामग्नयो न जरमाणा
नु द्यून् ॥ २ ॥ तव स्याम पुरुवीरस्य शर्मन्नुरुशंसस्य वरुण प्रणेतः । यूयं नः
त्रा अदितेरदब्धा अभि क्षमध्वं युज्याय देवाः ॥ ३ ॥ प्र सीमादित्यो असृज-
धर्ता ऋतं सिन्धवो वरुणस्य यन्ति । न श्राम्यन्ति न वि मुचन्त्येते वयो न पप्तू रघुया
रिज्मन् ॥ ४ ॥ वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य । मा
न्तुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः ॥ ५ ॥ ९ ॥ अपो सु
यक्ष वरुण भियसं मत्सम्राळृतावोऽनु मा गृभाय । दामेव वत्साद्वि मुमुग्ध्यंहो
हि त्वदारे निमिषश्चनेशे ॥ ६ ॥ मा नो वधैर्वरुण ये त इष्टावेनः कृण्वन्तमसुर
ीणन्ति । मा ज्योतिषः प्रवसथानि गन्म वि षू मृधः शिश्रथो जीवसे नः ॥ ७ ॥
मः पुरा ते वरुणोत नूनमुतापरं तुविजात ब्रवाम । त्वे हि कं पर्वते न श्रितान्य-
च्युतानि दूळभ व्रतानि ॥ ८ ॥ पर ऋणा सावीरध मत्कृतानि माहं राजन्नन्य-
तेन भोजं । अव्युष्टा इन्नु भूयसीरुषास आ नो जीवान्वरुण तासु शाधि ॥ ९ ॥
ो मे राजन्युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह । स्तेनो वा यो दिप्स-
ो नो वृको वा त्वं तस्माद्वरुण पाह्यस्मान् ॥ १० ॥ माहं मघोनो वरुण प्रिय-
य भूरिदाव्न आ विदं शूनमापेः । मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम वि-
थे सुवीराः ॥ ११ ॥ १० ॥

॥ २९ ॥ १–७ कूर्मो गार्त्समदो गृत्समदो वा ऋषिः ॥ विश्वे देवा देवता ॥
न्दः–१,४,५ निचृत् त्रिष्टुप् । २,६,७ त्रिष्टुप् । ३ विराट् त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ २९ ॥ धृतव्रता आदित्या इषिरा आरे मत्कर्त रहसूरिवागः । शृण्वतो
ो वरुण मित्र देवा भद्रस्य विद्वाँ अवसे हुवे वः ॥ १ ॥ यूयं देवाः प्रमतिर्यू-

यमोजो यूयं द्वेषांसि सनुतर्युयोत । अभिक्षत्तारो अभि च क्षमध्वमद्या च नो मृ
ळयतापरं च ॥ २ ॥ किमू नु वः कृणवामापरेण किं सनेन वसव आप्येन । यू
नो मित्रावरुणादिते च स्वस्तिमिन्द्रामरुतो दधात ॥ ३ ॥ हये देवा यूयमिदापय
स्थ ते मृळत नाधमानाय मह्यम् । मा वो रथो मध्यमवाळृते भून्मा युष्मावत्स्वा
पिषु श्रमिष्म ॥ ४ ॥ प्र व एको मिमय भूर्यागो यन्मा पितेव कितवं शशास
आरे पाशा आरे अघानि देवा मा माधि पुत्रे विमिव ग्रभीष्ट ॥ ५ ॥ अर्वाञ्च
अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम् । त्राध्वं नो देवा निजु
वृकस्य त्राध्वं कर्तादवपदो यजत्राः ॥ ६ ॥ माहं मघोनो वरुण प्रियस्य भूरि
दाव्न आ विदं शूनमापेः । मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सु
वीराः ॥ ७ ॥ ११ ॥

॥ ३० ॥ १-११ गृत्समद ऋषिः ॥ १-५, ७, ८, १० इन्द्रः । ६ इन्द्रा
सोमौ । ९ बृहस्पतिः । ११ मरुतो देवता ॥ छन्दः—१, ३ भुरिक् पङ्क्तिः । २
८ निचृत् त्रिष्टुप् । ४, ५, ६, ७, ९ त्रिष्टुप् । १० विराट् त्रिष्टुप् । ११ भुरिक्
त्रिष्टुप् ॥ स्वरः—१, ३ पञ्चमः । २, ४—११ धैवतः ॥

॥ ३० ॥ ऋतं देवाय कृण्वते सवित्र इन्द्रायाहिघ्ने न रमन्त आपः । अ
रहर्यात्यक्तुरपां कियात्या प्रथमः सर्ग आसाम् ॥ १ ॥ यो वृत्राय सिनमत्राभ
ष्यत्प्र तं जनित्री विदुष उवाच । पथो रदन्तीरनु जोषमस्मै दिवेदिवे धुनयो यन्त्य
र्थम् ॥ २ ॥ ऊर्ध्वो ह्यस्थादध्यन्तरिक्षेऽधा वृत्राय प्र वधं जभार । मिहं वसा
उप हीमदुद्रोत्तिग्मायुधो अजयच्छत्रुमिन्द्रः ॥ ३ ॥ बृहस्पते तपुषाश्नेव विध्य वृक
द्वरसो असुरस्य वीरान् । यथा जघन्थ धृषता पुरा चिदेवा जहि शत्रुमस्माकमि
न्द्र ॥ ४ ॥ अव क्षिप दिवो अश्मानमुच्चा येन शत्रुं मन्दसानो निजूर्वाः । तोक
स्य सातौ तनयस्य भूरेरस्माँ अर्धं कृणुतादिन्द्र गोनाम् ॥ ५ ॥ १२ ॥ प्र
क्रतुं वृहथो यं वनुथो रध्रस्य स्थो यजमानस्य चोदौ । इन्द्रासोमा युवमस्माँ अवि
ष्टमस्मिन्भयस्थे कृणुतमु लोकम् ॥ ६ ॥ न मा तमन्न श्रमन्नोत तन्द्रन्न वोचाम म
सुनोतेति सोमम् । यो मे पृणाद्यो ददद्यो निबोधाद्यो मा सुन्वन्तमुप गोभिराय
॥ ७ ॥ सरस्वति त्वमस्माँ अविड्ढि मरुत्वती धृषती जेषि शत्रून् । त्यं चिच्छर्धन्
तविषीयमाणमिन्द्रो हन्ति वृषभं शण्डिकानाम् ॥ ८ ॥ यो नः सनुत्य उत वा जि
घत्नुरभिख्याय तं तिगितेन विध्य । बृहस्पत आयुधैर्जेषि शत्रून्द्रुहे रीषन्तं प

इ राजन् ॥ ९ ॥ अस्माकेभिः सत्वभिः शूर शूरैर्वीर्या कृधि यानि ते कर्त्वानि ।
र्गभूव्रन्नर्नुधूपितासो हत्वी तेषामा भरा नो वसूनि ॥ १० ॥ तं वः शर्धं मा-
सुम्नयुर्गिरोप ब्रुवे नमसा दैव्यं जनम् । यथा रयिं सर्ववीरं नशामहा अप-
ाचं श्रुत्यं दिवेदिवे ॥ ११ ॥ १३ ॥

॥ ३१ ॥ १—७ गृत्समद ऋषिः ॥ विश्वे देवा देवता ॥ छन्दः—१, २,
जगती । ३ विराट् जगती । ५ निचृज्जगती । ६ त्रिष्टुप् । ७ पङ्क्तिः ॥
ः—१–५ निषादः । ६ धैवतः । ७ पञ्चमः ॥

॥ ३१ ॥ अस्माकं मित्रावरुणावतं रथमादित्यै रुद्रैर्वसुभिः सचाभुवा । प्र
यो न पप्तन्वस्मनस्परि श्रवस्यवो हृषीवन्तो वनर्षदः ॥ १ ॥ अध स्मा न उद-
सजोषसो रथं देवासो अभि विक्षु वाजयुम् । यदाशवः पद्याभिस्तित्रतो रजः
व्याः सानौ जङ्घनन्त पाणिभिः ॥ २ ॥ उत स्य न इन्द्रो विश्वचर्षणिर्दिवः
न मारुतेन सुक्रतुः । अनु नु स्थात्यवृकाभिरूतिभी रथं महे सनये वाजसातये
॥ उत स्य देवो भुवनस्य सक्षणिस्त्वष्टा ग्नाभिः सजोषा जूजुवद्रथम् । इळा
बृहद्दिवोत रोदसी पूषा पुरंन्धिरश्विनावधा पती ॥ ४ ॥ उत त्ये देवी सु-
मिथूदृशोषासानक्ता जगतामपीजुवा । स्तुषे यद्वां पृथिवि नव्यसा वचः स्था-
वयस्त्रिवया उपस्तिरे ॥ ५ ॥ उत वः शंसमुशिजामिव श्मस्यहिर्बुध्न्योऽज
ादुत । त्रित ऋभुक्षाः सविता चनो दधेऽपां नपादाशुहेमा धिया शमि ॥ ६ ॥
वो वश्म्युद्यता यजत्रा अतक्षन्नायवो नव्यसे सम् । श्रवस्यवो वाजं चकानाः
तर्न रथ्यो अह धीतिमश्याः ॥ ७ ॥ १४ ॥

॥ ३२ ॥ १—८ गृत्समद ऋषिः ॥ १ द्यावापृथिव्यौ । २, ३ इन्द्रस्त्वष्टा
४, ५ राका । ६, ७ सिनीवाली । ८ लिङ्गोक्ता देवता ॥ छन्दः—१ जगती ।
निचृज्जगती । ४, ५ विराट् जगती । २ त्रिष्टुप् । ६ अनुष्टुप् । ७ विराडनु-
। ८ निचृदनुष्टुप् ॥ स्वरः—१, ३–५ निषादः । २ धैवतः । ६–८ गान्धारः ॥

॥ ३२ ॥ अस्य मे द्यावापृथिवी ऋतायतो भूतमवित्री वचसः सिषासतः ।
रायुः प्रतरं ते इदं पुर उपस्तुते वसूयुर्वां महो दधे ॥ १ ॥ मा नो गुह्या रिप
ोरहन्दभन्मा न आभ्यो रीरधो दुच्छुनाभ्यः । मा नो वि यौः सख्या विद्धि
नः सुम्नायता मनसा तत्त्वेमहे ॥ २ ॥ अहेळता मनसा श्रुष्टिमा वह दुहानां धेनुं

पिप्युषीमसश्चतम् । पद्याभिराशुं वचसा च वाजिनं त्वां हिनोमि पुरुहूत विश्व
॥ ३ ॥ राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्व
सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ ४ ॥ यास्ते राके सु मत
सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपो
सुभगे रराणा ॥ ५ ॥ सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहु
प्रजां देवि दिदिड्ढि नः ॥ ६ ॥ या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी ।
स्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥ ७ ॥ या गुङ्गूर्या सिनीवाली या रा
या सरस्वती । इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥ ८ ॥ १५ ॥ ३ ॥

॥ ३३ ॥ १—१५ गृत्समद ऋषिः ॥ रुद्रो देवता ॥ छन्दः—१, ५,
१३, १४, १५ निचृत्त्रिष्टुप् । ३, ६, १०, ११ विराट् त्रिष्टुप् । ४, ८ त्रिष्टु
२ । ७ पङ्क्तिः । १२ भुरिक् पङ्क्तिः ॥ स्वरः—१, ३-६, ८—११, १३—
धैवतः । २, ७, १२ पञ्चमः ॥

॥ ३३ ॥ आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य सन्दृशो युयोथाः
अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः ॥ १ ॥ त्वादत्तेभी
शन्तमेभिः शतं हिमा अशीय भेषजेभिः । व्य१स्मद्द्वेषो वितरं व्यंहो व्यमीवाश्च
तयस्वा विषूचीः ॥ २ ॥ श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो
पर्षि णः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ॥ ३ ॥ मा त्वा
चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती । उन्नो वीराँ अर्पय भेषजेभिर्भिषक्त
त्वा भिषजां शृणोमि ॥ ४ ॥ हवीमभिर्हवते यो हविर्भिरव स्तोमेभी रुद्रं दिषीय
ऋदूदरः सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरधन्मनायै ॥ ५ ॥ १६ ॥ उन्
ममन्द वृषभो मरुत्वान्त्वक्षीयसा वयसा नाधमानम् । घृणीव छायामरपा अशी
विवासेयं रुद्रस्य सुम्नं ॥ ६ ॥ क्व१स्य ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो
लाषः । अपभर्ता रपसो दैव्यस्याभी नु मा वृषभ चक्षमीथाः ॥ ७ ॥ प्र बभ्र
वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि । नमस्या कल्मलीकिनं नमोभिर्गृण
मसि त्वेषं रुद्रस्य नाम ॥ ८ ॥ स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपि
हिरण्यैः । ईशानादस्य भुवनस्य भूरेर्न वा उ योषद्रुद्रादसुर्यम् ॥ ९ ॥ अर्हन्
बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमभ्वं
वा ओजीयो रुद्र त्वदस्ति ॥ १० ॥ १७ ॥ स्तुहि श्रुतं गर्तसदं युवानं मृगं न भ

पहन्तुमुग्रम् । मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥ ११ ॥
ाराशिंचात्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् । भूरेर्दातारं सत्पतिं गृणीषे
तस्त्वं भेषजा रास्यस्मे ॥ १२ ॥ या वो भेषजा मरुतः शुचीनि या शन्तमा
णो या मयोभु । यानि मनुरवृणीता पिता नस्ता शं च योश्च रुद्रस्य वश्मि
१३ ॥ परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात् । अव स्थिरा म-
द्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ ॥ १४ ॥ एवा बभ्रो वृषभ चेकितान
ा देव न हृणीषे न हंसि । हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीराः
१५ ॥ १८ ॥

॥ ३४ ॥ १—१५ गृत्समद ऋषिः ॥ मरुतो देवता ॥ छन्दः—१, ३, ८, ९
वृज्जगती । २, १०, ११, १२, १३ विराड्जगती । ४, ५, ६, ७, १४ जगती ।
निचृत् त्रिष्टुप् ॥ स्वरः—१—१४ निषादः । १५ धैवतः ॥

॥ ३४ ॥ धारावरा मरुतो धृष्ण्वोजसो मृगा न भीमास्तविषीभिरर्चिनः ।
नयो न शुशुचाना ऋजीषिणो भृमिं धमन्तो अप गा अवृण्वत ॥ १ ॥ द्यावो
स्तृभिश्चितयन्त खादिनो व्य१भ्रिया न द्युतयन्त वृष्टयः । रुद्रो यद्वो मरुतो
मवक्षसो वृषाजनि पृश्न्याः शुक्र ऊधनि ॥ २ ॥ उक्षन्ते अश्वाँ अत्याँ इवा-
षु नदस्य कर्णैस्तुरयन्त आशुभिः । हिरण्यशिप्रा मरुतो दविध्वतः पृक्षं याथ
तीभिः समन्यवः ॥ ३ ॥ पृक्षे ता विश्वा भुवना ववक्षिरे मित्राय वा सदमा
रदानवः । पृषदश्वासो अनवभ्रराधस ऋजिप्यासो न वयुनेषु धूर्षदः ॥ ४ ॥
न्वभिर्धेनुभी रप्शदूधभिरध्वस्मभिः पथिभिर्भ्राजदृष्टयः । आ हंसासो न स्व-
ाणि गन्तन मधोर्मदाय मरुतः समन्यवः ॥ ५ ॥ १९ ॥ आ नो ब्रह्माणि म-
ः समन्यवो नरां न शंसः सवनानि गन्तन । अश्वामिव पिप्यत धेनुमूधनि क-
धियं जरित्रे वाजपेशसम् ॥ ६ ॥ तं नो दात मरुतो वाजिनं रथ आपानं ब्रह्म
तयद्दिवेदिवे । इषं स्तोतृभ्यो वृजनेषु कारवे सनिं मेधामरिष्टं दुष्टरं सहः ॥ ७ ॥
ञ्जते मरुतो रुक्मवक्षसोऽश्वान्रथेषु भग आ सुदानवः । धेनुर्न शिश्वे स्वसरे-
पिन्वते जनाय रातहविषे महीमिषम् ॥ ८ ॥ यो नो मरुतो वृकताति मर्त्यो
र्दधे वसवो रक्षता रिषः । वर्तयत तपुषा चक्रियाभि तमव रुद्रा अशसो हन्त-
वधः ॥ ९ ॥ चित्रं तद्वो मरुतो याम चेकिते पृश्न्या यदूधरप्यापयो दुहुः ।
निदे नवमानस्य रुद्रियास्त्रितं जराय जुरतामदाभ्याः ॥ १० ॥ २० ॥ ता-
महो मरुत एवयाव्नो विष्णोरेषस्य प्रभृथे हवामहे । हिरण्यवर्णान्ककुहान्य-

तस्तुचो ब्रह्मण्यन्तः शंस्यं राधं ईमहे ॥ ११ ॥ ते दशंग्वाः प्रथमा यज्ञमूहिरे
नों हिन्वन्तूषसो व्युंष्टिषु । उषा न रामीररुणैरपोर्णुते महो ज्योतिषा शुचता गो
अर्णसा ॥ १२ ॥ ते क्षोणीभिररुणेभिर्नाञ्जिभी रुद्रा ऋतस्य सदनेषु वावृधुः
निमेघमाना अत्येन पाजसा सुश्चन्द्रं वर्णं दधिरे सुपेशसम् ॥ १३ ॥ ताँ इयान
महि वरूथमूतय उप घेदेना नमसा गृणीमसि । त्रितो न यान्पञ्च होतृनभिष्ट
आववर्तदवराञ्चक्रियावसे ॥ १४ ॥ यया रध्रं पारयथात्यंहो यया निदो मुञ्च
वन्दितारम् । अर्वाची सा मरुतो या व ऊतिरो षु वाश्रेव सुमतिर्जिगातु ॥ १५ ॥ २१

॥ ३५ ॥ १–१५ गृत्समद ऋषिः ॥ अपान्नपाद्देवता ॥ छन्दः–१, ४,
७, ९, १०, १२, १३, १५ निचृत्त्रिष्टुप् । ११ विराट् त्रिष्टुप् । १४ त्रिष्टुप्
२, ३, ८ भुरिक् पङ्क्तिः । ५ स्वराट् पङ्क्तिः ॥ स्वरः–१, ४, ६, ७, ९–१५,
वतः । २, ३, ८, ५ पञ्चमः ॥

॥ ३५ ॥ उपेमसृक्षि वाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे । अपां
पादाशुहेमा कुवित्स सुपेशसस्करति जोषिषद्धि ॥ १ ॥ इमं स्वस्मै हृद आ
तष्टं मन्त्रं वोचेमकुविदस्य वेदत् । अपां नपादसुर्यस्य मह्ना विश्वान्यर्यो भुव
जजान ॥ २ ॥ समन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति । तमू शु
शुचयो दीदिवांसमपां नपातं परि तस्थुरापः ॥ ३ ॥ तमस्मेरा युवतयो युवानं
मर्मृज्यमानाः परि यन्त्यापः । स शुक्रेभिः शिक्वभी रेवदस्मे दीदायानिध्मो घृत
र्णिगप्सु ॥ ४ ॥ अस्मै तिस्रो अव्यथ्याय नारीर्देवाय देवीर्दिधिषन्त्यन्नम् । कृ
इवोप हि प्रसर्स्रे अप्सु स पीयूषं धयति पूर्वसूनाम् ॥ ५ ॥ २२ ॥ अश्वस्य
जनिमास्य च स्वर्द्रुहो रिषः सम्पृचः पाहि सूरीन् । आमासु पूर्षु परो अप्रमृ
नारातयो वि नशन्नानृतानि ॥ ६ ॥ स्व आ दमे सुदुघा यस्य धेनुः स्वधां पी
य सुभ्वन्नमत्ति । सो अपां नपादूर्जयन्नप्स्व१न्तर्वसुदेयाय विधते वि भाति ॥ ७
यो अप्स्वा शुचिना दैव्येन ऋतावाजस्र उर्विया विभाति । वया इदन्या भुव
न्यस्य प्र जायन्ते वीरुधश्च प्रजाभिः ॥ ८ ॥ अपां नपादा ह्यस्थादुपस्थं जिह्मा
मूर्ध्वो विद्युतं वसानः । तस्य ज्येष्ठं महिमानं वहन्तीर्हिरण्यवर्णाः परि यन्ति य
॥ ९ ॥ हिरण्यरूपः स हिरण्यसन्दृगपां नपात्सेदु हिरण्यवर्णः । हिरण्यया
रि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥ १० ॥ २३ ॥ तदस्यानीकमुत चारु ना
पीच्यं वर्धते नप्तुरपाम् । यमिन्धते युवतयः समित्था हिरण्यवर्णं घृतमन्नमस्य ॥ १

मै बहूनामवमाय सख्यें यज्ञैर्विधेम नमसा हविर्भिः । सं सानु मार्ज्मि दिधि-
मि बिल्मैर्दधाम्यन्नैः परि वन्द ऋग्भिः ॥ १२ ॥ स ईं वृषाजनयत्तासु गर्भं
ईं शिशुर्धयति तं रिहन्ति । सो अपां नपादनभिम्लातवर्णोऽन्यस्येवेह तन्वा विवेष
१३ ॥ अस्मिन्पदे परमे तस्थिवांसमध्वस्माभिर्विश्वहा दीदिवांसम् । आपो नप्त्रे
मन्नं वहन्तीः स्वयमत्कैः परि दीयन्ति यह्वीः ॥ १४ ॥ अयांसमग्ने सुक्षितिं
ायायांसमु मघवद्भ्यः सुवृक्तिम् । विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे
ीराः ॥ १५ ॥ २४ ॥

॥ ३६ ॥ १–६ गृत्समद ऋषिः ॥ १ इन्द्रो मधुश्च । २ मरुतो माधवश्च । ३
ष्टा शुक्रश्च । ४ अग्निः शुचिश्च । ५ इन्द्रो नभश्च । ६ मित्रावरुणौ नभस्य-
देवता ॥ छन्दः–१, ४ स्वराट् त्रिष्टुप् । ५, ६ भुरिक् त्रिष्टुप् । २, ३ जगती ॥
रः–१, ४–६ धैवतः । २, ३ निषादः ॥

॥ ३६ ॥ तुभ्यं हिन्वानो वसिष्ट गा अपोऽधुक्षन्त्सीमविभिरद्रिभिर्नरः ।
न्द्र स्वाहा प्रहुतं वषट्कृतं होत्रादा सोमं प्रथमो य ईशिषे ॥ १ ॥ यज्ञैः सम्मि-
ः पृषतीभिर्ऋष्टिभिर्यामञ्छुभ्रासो अञ्जिषु प्रिया उत । आसद्या बर्हिर्भरतस्य
वः पोत्रादा सोमं पिबता दिवो नरः ॥ २ ॥ अमेव नः सुहवा आ हि गन्त-
नि बर्हिषि सदतना रणिष्टन । अथा मन्दस्व जुजुषाणो अन्धसस्त्वष्टर्देवेभि-
र्नेभिः सुमद्गणः ॥ ३ ॥ आ वक्षि देवाँ इह विप्र यक्षि चोशन्होतर्नि षदा
निषु त्रिषु । प्रति वीहि प्रस्थितं सोम्यं मधु पिबाग्नीध्रात्तव भागस्य तृप्णुहि
४ ॥ एष स्य ते तन्वो नृम्णवर्धनः सह ओजः प्रदिवि बाह्वोर्हितः । तुभ्यं सुतो
वन्तुभ्यमाभृतस्त्वमस्य ब्राह्मणादा तृपत्पिब ॥ ५ ॥ जुषेथां यज्ञं बोधतं हवस्य
सत्तो होता निविदः पूर्व्या अनु । अच्छा राजाना नम एत्यावृतं प्रशास्त्रादा
वतं सोम्यं मधु ॥ ६ ॥ २५ ॥ ७ ॥

॥ ३७ ॥ १–६ गृत्समद ऋषिः ॥ १–४ द्रविणोदाः । ५ अश्विनौ । ६
ग्निश्च देवता ॥ छन्दः–१, ५ निचृज्जगती । २ जगती । ३ विराड् जगती । ४,
भुरिक् त्रिष्टुप् ॥ स्वर–१–३, ५ निषादः । ४, ६ धैवतः ॥

॥ ३७ ॥ मन्दस्व होत्रादनु जोषमन्धसोऽध्वर्यवः स पूर्णां वष्ट्यासिचम् ।
स्मा एतं भरत तद्वशो ददिर्होत्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥ १ ॥ यमु

पूर्वमहुवे तमिदं हुवे सेदु हव्यो दुदिर्यो नाम पत्यते । अध्वर्युभिः प्रस्थितं सो
मधु पोत्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥ २ ॥ मेद्यन्तु ते वह्नयो येभिरीयसे
रिषण्यन्वीळयस्वा वनस्पते । आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणो
पिब ऋतुभिः ॥ ३ ॥ अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितम् । तु
पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः ॥ ४ ॥ अर्वाञ्चमद्य यय्यं नृ
हणं रथं युञ्जाथामिह वां विमोचनम् । पृङ्क्तं हवींषि मधुना हि कं गतमथा सो
पिबतं वाजिनीवसू ॥ ५ ॥ जोष्यग्ने समिधं जोष्याहुतिं जोषि ब्रह्म जन्यं जो
सुष्टुतिम् । विश्वेभिर्विश्वाँ ऋतुना वसो मह उशन्देवाँ उशतः पायया हविः ॥ ६ ॥

॥३८॥ १–११ गृत्समद ऋषिः ॥ सविता देवता ॥ छन्दः–१,५ निचृत् त्रिष्टु
२ त्रिष्टुप् । ३, ४, ६, १०, ११ विराट् त्रिष्टुप् । ७, ८ स्वराट् पङ्क्तिः । ९ भुरि
पङ्क्तिः ॥ स्वर–१–६, १०, ११ धैवतः । ७–९ पञ्चमः ॥

॥ ३८ ॥ उदु ष्य देवः सविता सवाय शश्वत्तमं तदपा वह्निरस्थात् ।
देवेभ्यो वि हि धाति रत्नमथाभजद्वीतिहोत्रं स्वस्तौ ॥ १ ॥ विश्वस्य हि श्रुष्
देव ऊर्ध्वः प्र बाहवा पृथुपाणिः सिसर्ति । आपश्चिदस्य व्रत आ निमृग्रा अ
चिद्वातो रमते परिज्मन् ॥ २ ॥ आशुभिश्चिद्यान्वि मुचाति नूनमरीरमदतम
चिदेतोः । अह्यर्षूणां चिन्न्ययाँ अविष्यामनु व्रतं सवितुर्मोक्यागात् ॥ ३ ॥ पु
समव्यद्वितंतं वयन्ती मध्या कर्तोर्न्यधाच्छक्म धीरः । उत्संहायास्थाद्व्यृतूँरदध
रमतिः सविता देव आगात् ॥ ४ ॥ नानौकांसि दुर्यो विश्वमायुर्वि तिष्ठते प्रभ
शोको अग्नेः । ज्येष्ठं माता सूनवे भागमाधादन्वस्य केतमिषितं सवित्रा ॥५॥
समाववर्ति विष्ठितो जिगीषुर्विश्वेषां काममचरतामभूत् । शश्वाँ अपो विकृतं
त्व्यागादनु व्रतं सवितुर्दैव्यस्य ॥ ६ ॥ त्वया हितमप्यमप्सु भागं धन्वान्वा मृ
यसो वि तस्थुः । वनानि विभ्यो न किरस्य तानि व्रता देवस्य सवितुर्मिनन्ति ॥७
याद्राध्यं वरुणो योनिमप्यमनिशितं निमिषि जर्भुराणः । विश्वो मार्ताण्डो व्रज
पशुर्गात्स्थशो जन्मानि सविता व्याकः ॥ ८ ॥ न यस्येन्द्रो वरुणो न मित्रो
तमर्यमा न मिनन्ति रुद्रः । नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभि
॥ ९ ॥ भगं धियं वाजयन्तः पुरंधिं नराशंसो ग्नास्पतिर्नो अव्याः । आये
मस्य सङ्गथे रयीणां प्रिया देवस्य सवितुः स्याम ॥ १० ॥ अस्मभ्यं तदि
अद्भ्यः पृथिव्यास्त्वया दत्तं काम्यं राध आ गात् । शं यत्स्तोतृभ्य आपये
वात्युरुशंसाय सवितर्जरित्रे ॥ ११ ॥ ३ ॥

॥ ३९ ॥ १—८ गृत्समद ऋषिः ॥ अश्विनौ देवते ॥ छन्दः—१ निचृ-
ष्टुप्। ३ विराट् त्रिष्टुप्। ४, ७, ८ त्रिष्टुप्। २ भुरिक् पङ्क्तिः। ५, ६ स्वराट्
ङ्क्तिः ॥ स्वरः—१, ३, ४, ७, ८ धैवतः। २, ५, ६ पञ्चमः ॥

॥ ३९ ॥ ग्रावा॑णेव॒ तदिदर्थं॑ जरेथे॒ गृध्रे॑व वृ॒क्षं नि॑धि॒मन्त॒मच्छ॑। ब्र॒ह्माणे॑व
दर्थ उक्थ॒शासा॑ दू॒तेव॒ हव्या॒ जन्या॑ पुरु॒त्रा ॥ १ ॥ प्रा॒त॒र्यावा॑णा र॒थ्ये॑व वी॒रा-
वं य॒मा वर॒मा सचे॑थे। मेने॑ इव त॒न्वा॒३॒॑ शुम्भ॑माने॒ दम्प॑तीव क्रतु॒विदा॒ जने॑षु ॥२॥
ङ्गे॑व नः प्रथ॒मा ग॑न्तम॒र्वाक् श॒फावि॑व॒ जर्भु॑राणा॒ तरो॑भिः। च॒क्र॒वा॒केव॒ प्रति॒ वस्तो॑-
स्रा॒र्वाञ्चा॑ यातं र॒थ्ये॑व शक्रा ॥ ३ ॥ ना॒वेव॑ नः पारयतं यु॒गेव॒ नभ्ये॑व न उप॒-
वे॑ प्र॒धीव॑। श्वाने॑व नो॒ अरि॑षण्या त॒नूनां॒ खृग॑लेव वि॒स्रसः॑ पातम॒स्मान् ॥४॥
तेवा॒जुर्या॑ न॒द्ये॑व री॒तिर॒क्षी इ॑व॒ चक्षु॒षा या॑तम॒र्वाक्। हस्ता॑विव त॒न्वे॒३॒॑ शम्भ॑विष्ठा
दे॑व नो नयतं॒ वस्यो॒ अच्छ॑ ॥ ५ ॥ ४ ॥ ओष्ठा॑विव॒ मध्वा॒स्ने वद॑न्ता॒ स्तना॑-
व पिप्यतं॒ जी॒वसे॑ नः। नासे॑व नस्त॒न्वो॑ रक्षि॒तारा॒ कर्णा॑विव सु॒श्रुता॑ भूतम॒स्मे
६ ॥ हस्ते॑व श॒क्तिम॒भि स॑न्द॒दी नः॒ क्षामे॑व नः॒ सम॑जतं॒ रजां॑सि। इ॒मा गिरो॑
श्विना युष्म॒यन्तीः॒ क्ष्णोत्रे॑णेव॒ स्वधि॑ति॒ सं शि॑शीतम् ॥ ७ ॥ ए॒तानि॑ वामश्वि-
वर्ध॑नानि॒ ब्रह्म॒ स्तोमं॑ गृत्सम॒दासो॑ अक्रन्। तानि॑ नरा जुजुषा॒णोप॑ यातं बृह-
दे॑म वि॒दथे॑ सु॒वीराः॑ ॥ ८ ॥ ५ ॥

॥ ४० ॥ १—६ गृत्समद ऋषिः ॥ १—६ सोमापूषणावदितिश्च देवता ॥
न्दः—१, ३ त्रिष्टुप्। २ विराट् त्रिष्टुप्। ५, ६ निचृत् त्रिष्टुप्। ४ स्वराट् पङ्क्तिः ॥
रः—१—३, ५, ६ धैवतः। ४ पञ्चमः ॥

॥ ४० ॥ सोमा॑पूषणा॒ जन॑ना रयी॒णां जन॑ना दि॒वो जन॑ना पृथि॒व्याः। जा॒तौ
श्व॑स्य॒ भुव॑नस्य गो॒पौ दे॒वा अ॑कृण्वन्न॒मृत॑स्य॒ नाभि॑म् ॥ १ ॥ इ॒मौ दे॒वौ जाय॑मानौ
न्ते॒मौ तमां॑सि गूहता॒मजु॑ष्टा। आ॒भ्यामिन्द्रः॑ प॒क्वमा॒मास्व॒न्तः सोमा॒पूष॒भ्यां॑ जन-
स्रिया॑सु ॥ २ ॥ सोमा॑पूषणा॒ रज॑सो वि॒मानं॑ स॒प्तच॑क्रं॒ रथ॒मवि॑श्वमिन्वम्। वि॒षू॒-
मन॑सा यु॒ज्यमा॑नं॒ तं जि॑न्वथो वृषणा॒ पञ्च॑रश्मिम् ॥ ३ ॥ दि॒व्य१॒॑न्यः सद॑नं
उ॒च्चा पृ॑थि॒व्याम॒न्यो अध्य॒न्तरि॑क्षे। ताव॒स्मभ्यं॑ पुरु॒वारं॑ पु॒रु॒क्षुं रा॒यस्पोषं॒ वि
ता॑ नाभि॑म॒स्मे ॥ ४ ॥ विश्वा॑न्य॒न्यो भुव॑ना ज॒जान॒ विश्व॑म॒न्यो अ॑भि॒चक्षा॑ण
ति। सोमा॑पूषणा॒वव॑तं॒ धियं॑ मे यु॒वाभ्यां॒ विश्वाः॒ पृत॑ना जयेम ॥ ५ ॥ धियं॑ पू॒षा
न्वतु विश्वमि॒न्वो र॒यिं सोमो॑ रयि॒पति॑र्दधातु। अव॑तु दे॒व्यदि॑तिरन॒र्वा बृ॒हद्व॑-
म वि॒दथे॑ सु॒वीराः॑ ॥ ६ ॥ ६ ॥

॥ ४१ ॥ १-२१ गृत्समद ऋषिः ॥ १, २ वायुः । ३ इन्द्रवायू । ४-
मित्रावरुणौ । ७-९ अश्विनौ । १०-१२ इन्द्रः । १३-१५ विश्वे देवाः । १६-१
सरस्वती । १९-२१ द्यावापृथिव्यौ हविर्धाने वा देवता ॥ छन्दः-१, ३, ४,
१०, ११, १३, १५, १९, २०, २१ गायत्री । २, ५, ९, १२, १४, निचृ
गायत्री । ७ त्रिपाद्गायत्री । ८ विराड् गायत्री । १६ अनुष्टुप् । १७ उष्णिक्
१८ बृहती ॥ स्वरः-१-१५, १९-२१ षड्जः । १६ गान्धारः । १७ ऋषभः
१८ मध्यमः ॥

॥ ४१ ॥ वायो ये ते सहस्रिणो रथासस्तेभिरा गहि । नियुत्वान्त्सोमपीत
॥ १ ॥ नियुत्वान्वायवा गह्ययं शुक्रो अयामि ते । गन्तासि सुन्वतो गृहम् ॥ २
शुक्रस्याद्य गवाशिर इन्द्रवायू नियुत्वतः । आ यातं पिबतं नरा ॥ ३ ॥ अयं
मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतं हवम् ॥ ४ ॥ राजानावनभि
द्रुहा ध्रुवे सदस्युत्तमे । सहस्रस्थूण आसाते ॥ ५ ॥७॥ ता सम्राजा घृतासुती आ
दित्या दानुनस्पती । सचेते अनवह्वरं ॥ ६ ॥ गोमदू षु नासत्याश्वावद्यातमश्विना
वर्ती रुद्रा नृपाय्यम् ॥ ७ ॥ न यत्परो नान्तर आदधर्षद्वृषण्वसू । दुःशंसो मर्त्य
रिपुः ॥ ८ ॥ ता न आ वोळ्हमश्विना रयिं पिशङ्गसन्दृशम् । धिष्ण्या वरि
विदम् ॥ ९ ॥ इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत् । स हि स्थिरो विचर्षणि
॥ १० ॥ ८ ॥ इन्द्रश्च मृळयाति नो न नः पश्चादघं नशत् । भद्रं भवाति
पुरः ॥ ११ ॥ इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । जेता शत्रून्विचर्षणि
॥ १२ ॥ विश्वे देवास आ गत शृणुता म इमं हवम् । एदं बर्हिर्नि षीदत ॥१
तीव्रो वो मधुमाँ अयं शुनहोत्रेषु मत्सरः । एतं पिबत काम्यम् ॥ १४ ॥ इन्द्रज्ये
ष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवम् ॥ १५ ॥ ९ ॥ अम्बि
मे नदीतमे देवितमे सरस्वति । अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि ॥१
त्वे विश्वा सरस्वति श्रितायूंषि देव्याम् । शुनहोत्रेषु मत्स्व प्रजां देवि दिदि
नः ॥ १७ ॥ इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति । या ते मन्म गृत्समदा
तावरि प्रिया देवेषु जुह्वति ॥ १८ ॥ प्रेतां यज्ञस्य शम्भुवा युवामिदा वृणीमहे
अग्निं च हव्यवाहनम् ॥ १९ ॥ द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृश
यज्ञं देवेषु यच्छताम् ॥ २० ॥ आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इह
सोमपीतये ॥ २१ ॥ १० ॥

॥ ४२ ॥ १–३ गृत्समद ऋषिः ॥ कपिञ्जल इवेन्द्रो देवता ॥ छन्दः–१,२,३
ष्टुप् ॥ धैवतः स्वरः ॥

॥ ४२ ॥ कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् । सुमङ्गलश्च
कुने भवासि मा त्वा का चिदभिभा विश्व्या विदत् ॥ १ ॥ मा त्वा श्येन उ-
धीन्मा सुपर्णो मा त्वा विददिषुमान्वीरो अस्ता । पित्र्यामनु प्रदिशं कनिक्रद-
सुमङ्गलो भद्रवादी वदेह ॥ २ ॥ अव क्रन्द दक्षिणतो गृहाणां सुमङ्गलो भद्रवादी
कुन्ते । मा नः स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः ॥ ३ ॥ ११ ॥

॥ ४३ ॥ १–३ गृत्समद ऋषिः ॥ कपिञ्जल इवेन्द्रो देवता ॥ छन्दः–१ ज-
ती । ३ निचृज्जगती । २ भुरिगतिशक्वरी ॥ स्वरः–१, ३ निषादः । २ पञ्चमः ॥

॥ ४३ ॥ प्रदक्षिणिदभि गृणन्ति कारवो वयो वदन्त ऋतुथा शकुन्तयः ।
भे वाचौ वदति सामगा इव गायत्रं च त्रैष्टुभं चानु राजति ॥ १ ॥ उद्गातेव श-
ने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि । वृषेव वाजी शिशुमतीरपीत्या
र्वतो नः शकुने भद्रमा वद विश्वतो नः शकुने पुण्यमा वद ॥ २ ॥ आवदंस्त्वं
कुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः । यदुत्पतन्वदसि कर्करि-
था बृहद्वदेम विदथे सुवीराः ॥ ३ ॥ १२ ॥ ४ ॥ २ ॥

॥ इति द्वितीयं मण्डलं समाप्तम् ॥

---

# अथतृतीय मण्डलम् ॥

---

॥ १ ॥ १–१३ गाथिनो विश्वामित्र ऋषिः ॥ अग्निर्देवता ॥ छन्दः—१
३, ४, ५, ६, ११, १२, १५, १७, १९, २० निचृत्त्रिष्टुप् । २, ६, ७, १३, १
त्रिष्टुप् । १०, २१ विराट् त्रिष्टुप् । २२ ज्योतिष्मती त्रिष्टुप् । ८, १६, २
स्वराट् पङ्क्तिः । १८ भुरिक् पङ्क्तिः ॥ स्वरः—१–७, ९–१५, १७, १९—२
धैवतः । ८, १६, १८, २३ पञ्चमः ॥

॥ १ ॥ सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै । देवाँ अच्छ
दीद्यद्युञ्जे अद्रिं शमाये अग्ने तन्वं जुषस्व ॥ १ ॥ प्राञ्चं यज्ञं चकृम वर्धत
गीः समिद्भिरग्निं नमसा दुवस्यन् । दिवः शशासुर्विदथा कवीनां गृत्साय चित्त
वसे गातुमीषुः ॥ २ ॥ मयो दधे मेधिरः पूतदक्षो दिवः सुबन्धुर्जनुषा पृथिव्याः
अविन्दन्नु दर्शतमप्स्व१न्तर्देवासो अग्निमपसि स्वसॄणाम् ॥ ३ ॥ अवर्धयन्त्सुभ
सप्त यह्वीः श्वेतं जज्ञानमरुषं महित्वा । शिशुं न जातमभ्यारुरश्वा देवासो अग्नि
जनिमन्वपुष्यन् ॥ ४ ॥ शुक्रेभिरङ्गै रज आततन्वान् क्रतुं पुनानः कविभि
पवित्रैः । शोचिर्वसानः पर्यायुरपां श्रियो मिमीते बृहतीरनूनाः ॥ ५ ॥ १३
वव्राजा सीमनदतीरदब्धा दिवो यह्वीरवसाना अनग्नाः । सना अत्र युवतयः स
योनीरेकं गर्भं दधिरे सप्त वाणीः ॥ ६ ॥ स्तीर्णा अस्य संहतो विश्वरूपा घृतस
योनौ स्रवथे मधूनाम् । अस्थुरत्र धेनवः पिन्वमाना मही दस्मस्य मातरा समीच
॥ ७ ॥ बभ्राणः सूनो सहसो व्यद्यौद्दधानः शुक्रा रभसा वपूंषि । श्चोतन्ति धार
मधुनो घृतस्य वृषा यत्र वावृधे काव्येन ॥ ८ ॥ पितुश्चिदूधर्जनुषा विवेद व्यस
धारा असृजद्वि धेनाः । गुहा चरन्तं सखिभिः शिवेभिर्दिवो यह्वीभिर्न गुहा ब
भूव ॥ ९ ॥ पितुश्च गर्भं जनितुश्च बभ्रे पूर्वीरेको अधयत्पीप्यानाः । वृष्णे सपत्न
शुचये सबन्धू उभे अस्मै मनुष्ये३नि पाहि ॥ १० ॥ १४ ॥ उरौ महाँ अनिबाध
ववर्धापो अग्निं यशसः सं हि पूर्वीः । ऋतस्य योनावशयद्दमूना जामीनामग्नि
पसि स्वसॄणाम् ॥ ११ ॥ अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋ

ीकः। उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥ १२ ॥
ापां गर्भं दर्शतमोषधीनां वना जजान सुभगा विरूपम्। देवासश्चिन्मनसा सं हि
ग्मुः पनिष्ठं जातं तवसं दुवस्यन् ॥ १३ ॥ बृहन्त इद्भानवो भाऋजीकमग्निं स-
न्त विद्युतो न शुक्राः। गुहेव वृद्धं सदसि स्वे अन्तरपार ऊर्वे अमृतं दुहानाः
१४ ॥ ईळे च त्वा यजमानो हविर्भिरीळे सखित्वं सुमतिं निकामः। देवैरवो
ममीहि सं जरित्रे रक्षा च नो दम्येभिरनीकैः ॥ १५ ॥ १५ ॥ उपक्षेतारस्तव
प्रणीतेऽग्ने विश्वानि धन्या दधानाः। सुरेतसा श्रवसा तुञ्जमाना अभि ष्याम
तनायूँरदेवान् ॥ १६ ॥ आ देवानामभवः केतुरग्ने मन्द्रो विश्वानि काव्यानि
द्वान्। प्रति मर्ताँ अवासयो दमूना अनु देवान्रथिरो यासि साधन् ॥ १७ ॥
दुरोणे अमृतो मर्त्यानां राजा ससाद विदथानि साधन्। घृतप्रतीक उर्विया
द्यौदग्निर्विश्वानि काव्यानि विद्वान् ॥ १८ ॥ आ नो गहि सख्येभिः शिवे-
र्महान्महीभिरूतिभिः सरण्यन्। अस्मे रयिं बहुलं सन्तरुत्रं सुवाचं भागं यशसं
धी नः ॥ १९ ॥ एता ते अग्ने जनिमा सनानि प्र पूर्व्याय नूतनानि वोचं। महा-
त वृष्णे सवना कृतेमा जन्मञ्जन्मन् निहितो जातवेदाः ॥ २० ॥ जन्मञ्जन्मन्
हितो जातवेदा विश्वामित्रेभिरिध्यते अजस्रः। तस्य वयं सुमतौ यज्ञियस्यापि भद्रे
ौमनसे स्याम ॥ २१ ॥ इमं यज्ञं सहसावन् त्वं नो देवत्रा धेहि सुक्रतो ररा-
ः। प्र यंसि होतर्बृहतीरिषो नोऽग्ने महि द्रविणमा यजस्व ॥ २२ ॥ इळामग्ने
रुदंसं सनिं गोः शश्वत्तमं हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाग्ने
ा ते सुमतिर्भूत्वस्मे ॥ २३ ॥ १६ ॥

॥ २ ॥ १–१५ विश्वामित्र ऋषिः ॥ अग्निर्वैश्वानरो देवता ॥ छन्दः–१,
, १० जगती। २, ४, ८, ६, ९, ११ विराड् जगती। ५, ७, १२, १३, १४,
५ निचृज्जगती च ॥ निषादः स्वरः ॥

॥ २ ॥ वैश्वानराय धिषणामृतावृधे घृतं न पूतमग्नये जनामसि। द्विता हो-
ारं मनुषश्च वाघतो धिया रथं न कुलिशः समृण्वति ॥ १ ॥ स रोचयज्जनुषा
ोदसी उभे स मात्रोरभवत्पुत्र ईड्यः। हव्यवाळग्निरजरश्चनोहितो दूळभो वि-
ामतिथिर्विभावसुः ॥ २ ॥ क्रत्वा दक्षस्य तरुषो विधर्मणि देवासो अग्निं जनयन्त
चित्तिभिः। रुरुचानं भानुना ज्योतिषा महामत्यं न वाजं सनिष्यन्नुप ब्रुवे ॥ ३ ॥
ा मन्द्रस्य सनिष्यन्तो वरेण्यं वृणीमहे अह्रयं वाजमृग्मियम्। रातिं भृगूणामु-

शिजं कविक्रतुमग्निं राजन्तं दिव्येन शोचिषा ॥ ४ ॥ अग्निं सुम्नाय दधिरे पुरो
जना वाजश्रवसमिह वृक्तबर्हिषः । यतस्रुचः सुरुचं विश्वदेव्यं रुद्रं यज्ञानां साध-
दिष्टिमपसाम् ॥ ५ ॥ १७ ॥ पावकशोचे तव हि क्षयं परि होतर्यज्ञेषु वृक्तबर्हिषो
नरः । अग्ने दुव इच्छमानास आप्यमुपासते द्रविणं धेहि तेभ्यः ॥ ६ ॥ आ रोदसी
अपृणदा स्वर्महज्जातं यदेनमपसो अधारयन् । सो अध्वराय परि णीयते कविर-
त्यो न वाजसातये चनोहितः ॥ ७ ॥ नमस्यत हव्यदातिं स्वध्वरं दुवस्यत दम्यं
जातवेदसम् । रथीर्ऋतस्य बृहतो विचर्षणिरग्निर्देवानामभवत्पुरोहितः ॥ ८ ॥
तिस्रो यह्वस्य समिधः परिज्मनोऽग्नेरपुनन्नुशिजो अमृत्यवः । तासामेकामदधुर्मर्त्ये
भुजमु लोकमु द्वे उप जामिमीयतुः ॥ ९ ॥ विशां कविं विश्पतिं मानुषीरिषः सं
सीमकृण्वन्त्स्वधितिं न तेजसे । स उद्वतो निवतो याति वेविषत्स गर्भमेषु भुवनेषु
दीधरत् ॥ १० ॥ १८ ॥ स जिन्वते जठरेषु प्रजज्ञिवान्वृषा चित्रेषु नानदन्न सिंहः ।
वैश्वानरः पृथुपाजा अमर्त्यो वसु रत्ना दयमानो वि दाशुषे ॥ ११ ॥ वैश्वानर
प्रत्नथा नाकमारुहद्दिवस्पृष्ठं भन्दमानः सुमन्मभिः । स पूर्ववज्जनयञ्जन्तवे धनं
समानमज्मं पर्येति जागृविः ॥ १२ ॥ ऋतावानं यज्ञियं विप्रमुक्थ्यमा यं दधे
मातरिश्वा दिवि क्षयम् । तं चित्रयामं हरिकेशमीमहे सुदीतिमग्निं सुविताय नव्यसे
॥ १३ ॥ शुचिं न यामन्निषिरं स्वर्दृशं केतुं दिवो रोचनस्थामुषर्बुधम् । अग्निं
मूर्धानं दिवो अप्रतिष्कुतं तमीमहे नमसा वाजिनं बृहत् ॥ १४ ॥ मन्द्रं होतारं
शुचिमद्वयाविनं दमूनसमुक्थ्यं विश्वचर्षणिम् । रथं न चित्रं वपुषाय दर्शतं मनु-
र्हितं सदमिद्राय ईमहे ॥ १५ ॥ १९ ॥

॥ ३ ॥ १–११ विश्वामित्र ऋषिः ॥ अग्निर्वैश्वानरो देवता ॥ छन्दः–१,
५ निचृज्जगती । २, ३, ४, ६, ८, ९ जगती । ७, १० विराट् जगती । ११
भुरिक् पङ्क्तिः । स्वरः–१–१० निषादः । ११ पञ्चमः ॥

॥ ३ ॥ वैश्वानराय पृथुपाजसे विपो रत्ना विधन्त धरुणेषु गातवे । अग्निर्हि
देवाँ अमृतो दुवस्यत्यथा धर्माणि सनता न दूदुषत् ॥ १ ॥ अन्तर्दूतो रोदसी
दस्म ईयते होता निषत्तो मनुषः पुरोहितः । क्षयं बृहन्तं परि भूषति द्युभिर्देवेभि-
रग्निरिषितो धियावसुः ॥ २ ॥ केतुं यज्ञानां विदथस्य साधनं विप्रासो अग्निं
महयन्त चित्तिभिः । अपांसि यस्मिन्नधि सन्दधुर्गिरस्तस्मिन्त्सुम्नानि यजमान आ
चके ॥ ३ ॥ पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम्

विवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः ॥ ४ ॥ चन्द्रमग्निं च-
रथं हरिव्रतं वैश्वानरमप्सुषदं स्वर्विदम् । विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं
सं इह सुश्रियं दधुः ॥ ५ ॥ २० ॥ अग्निर्देवेभिर्मनुषश्च जन्तुभिस्तन्वानो
पुरुपेशसं धिया । रथीरन्तरीयते साधदिष्टिभिर्जीरो दमूना अभिशस्तिचातनः
६ ॥ अग्ने जरस्व स्वपत्य आयुन्यूर्जा पिन्वस्व समिषो दिदीहि नः । वयांसि
न्व बृहतश्च जागृव उशिग्देवानामसि सुक्रतुर्विपाम् ॥ ७ ॥ विश्पतिं यह्वमति-
नरः सदा यन्तारं धीनामुशिजं च वाघताम् । अध्वराणां चेतनं जातवेदसं
शंसन्ति नमसा जूतिभिर्वृधे ॥ ८ ॥ विभावा देवः सुरणः परि क्षितीरग्निर्ब-
शवसा सुमद्रथः । तस्य व्रतानि भूरिपोषिणो वयमुप भूषेम दम आ सुवृक्ति-
: ॥ ९ ॥ वैश्वानर तव धामान्या चके येभिः स्वर्विदभवो विचक्षण । जात
पृणो भुवनानि रोदसी अग्ने ता विश्वा परिभूरसि त्मना ॥ १० ॥ वैश्वान-
य दंसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः । उभा पितरा महयन्नजायता-
द्यावापृथिवी भूरिरेतसा ॥ ११ ॥ २१ ॥

॥ ४ ॥ १—११ विश्वामित्र ऋषिः ॥ आप्रियो देवता ॥ छन्दः—१,
७ स्वराट् पङ्क्तिः । २, ३, ५ त्रिष्टुप् । ६, ८, १०, ११ निचृत्त्रिष्टुप् । ९
राट् त्रिष्टुप् ॥ स्वरः—१, ४, ७ पञ्चमः । २, ३, ५, ६, ८—११ धैवतः ॥

॥ ४ ॥ समित्संमित्सुमना बोध्यस्मे शुचाशुचा सुमतिं रासि वस्वः । आ
देवान्यजथाय वक्षि सखा सखीन्त्सुमना यक्ष्यग्ने ॥ १ ॥ यं देवासस्त्रि-
रायजन्ते दिवेदिवे वरुणो मित्रो अग्निः । सेमं यज्ञं मधुमन्तं कृधी नस्तनूनपा-
तयोनिं विधन्तम् ॥ २ ॥ प्र दीधितिर्विश्ववारा जिगाति होतारमिळः प्रथमं य-
ध्यै । अच्छा नमोभिर्वृषभं वन्दध्यै स देवान्यक्षदिषितो यजीयान् ॥ ३ ॥ ऊ-
र्ध्वो वां गातुरध्वरे अकार्यूर्ध्वा शोचींषि प्रस्थिता रजांसि । दिवो वा नाभा न्य-
दि होता स्तृणीमहि देवव्यचा वि बर्हिः ॥ ४ ॥ सप्त होत्राणि मनसा वृणाना
वन्तो विश्वं प्रति यन्नृतेन । नृपेशसो विदथेषु प्र जाता अभी३मं यज्ञं वि चरन्त
र्वीः ॥ ५ ॥ २२ ॥ आ भन्दमाने उषसा उपाके उत स्मयेते तन्वा३ विरूपे ।
था नो मित्रो वरुणो जुजोषदिन्द्रो मरुत्वाँ उत वा महोभिः ॥ ६ ॥ दैव्या हो-
रा प्रथमा न्यृञ्जे सप्त पृक्षासः स्वधया मदन्ति । ऋतं शंसन्त ऋतमित्त आ-
नु व्रतं व्रतपा दीध्यानाः ॥ ७ ॥ आ भारती भारतीभिः सजोषा इळा देवैर्म-

नुष्येभिरग्निः । सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदन्तु ॥ ८
तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व । यतो वीरः कर्मण्यः सुदक्ष
युक्तग्रावा जायते देवकामः ॥ ९ ॥ वनस्पतेऽव सृजोप देवानग्निर्हविः शमित
सूदयाति । सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेद ॥ १०
आ याह्यग्ने समिधानो अर्वाङिन्द्रेण देवैः सरथं तुरेभिः । बर्हिर्न आस्तामदिति
सुपुत्रा स्वाहा देवा अमृता मादयन्ताम् ॥ ११ ॥ २३ ॥

॥ ५ ॥ १—११ विश्वामित्र ऋषिः अग्निर्देवता ॥ छन्दः—१, २, १
भुरिक् पङ्क्तिः । ३ पङ्क्तिः । ६ स्वराट् पङ्क्तिः । ४ त्रिष्टुप् । ५, ७, १० निचृत्त्रि
ष्टुप् । ८,९ विराट् त्रिष्टुप् ॥ स्वरः–१–३,६,११ पञ्चमः । ४,५, ७–१० धैवतः

॥ ५ ॥ प्रत्यग्निरुषसश्चेकितानोऽबोधि विप्रः पदवीः कवीनाम् । पृथुपाज
देवयद्भिः समिद्धोऽप द्वारा तमसो वह्निरावः ॥ १ ॥ प्रेद्वग्निर्वावृधे स्तोमेभिर्गी
र्भिः स्तोतॄणां नमस्य उक्थैः । पूर्वीर्ऋतस्य सन्दृशश्चकानः सं दूतो अद्यौ
षसो विरोके ॥ २ ॥ अधाय्यग्निर्मानुषीषु विक्ष्वपां गर्भो मित्र ऋतेन स
धन् । आ हर्यतो यजतः सान्वस्थादभूदु विप्रो हव्यो मतीनाम् ॥ ३ ॥ मित्र
अग्निर्भवति यत्समिद्धो मित्रो होता वरुणो जातवेदाः । मित्रो अध्वर्युरिषिरो
मूना मित्रः सिन्धूनामुत पर्वतानाम् ॥ ४ ॥ पाति प्रियं रिपो अग्रं पदं वेः पा
यह्वश्चरणं सूर्यस्य । पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्व
॥ ५ ॥ २४ ॥ ऋभुश्चक्र ईड्यं चारु नाम विश्वानि देवो वयुनानि विद्वान्
ससस्य चर्म घृतवत्पदं वेस्तदिदग्नी रक्षत्यप्रयुच्छन् ॥ ६ ॥ आ योनिमग्निर्घृत
वन्तमस्थात्पृथुप्रगाणमुशन्तमुशानः । दीद्यानः शुचिर्ऋष्वः पावकः पुनः पुनर्मा
रा नव्यसी कः ॥ ७ ॥ सद्यो जात ओषधीभिर्ववक्षे यदी वर्धन्ति प्रस्वो घृतेन
आप इव प्रवता शुम्भमाना उरुष्यदग्निः पित्रोरुपस्थे ॥ ८ ॥ उदु ष्टुतः समिध
यह्वो अद्यौद्वर्ष्मन्दिवो अधि नाभा पृथिव्याः । मित्रो अग्निरीड्यो मातरिश्वा
तो वक्षद्यजथाय देवान् ॥ ९ ॥ उदस्तम्भीत्समिधा नाकमृष्वोऽग्निर्भवन्नुत्तमो र
चनानाम् । यदी भृगुभ्यः परि मातरिश्वा गुहा सन्तं हव्यवाहं समीधे ॥ १०
इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध । स्यान्नः सूनुस्तनयो वि
जावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ११ ॥ २५ ॥

॥ ६ ॥ १–११ विश्वामित्र ऋषिः ॥ अग्निर्देवता ॥ छन्दः–१, ५ विरा

ष्टुप् । २, ७ त्रिष्टुप् । ३, ४, ८ निचृत्त्रिष्टुप् । १० भुरिक् त्रिष्टुप् । ६, ११
रिक् पङ्क्तिः । ९ स्वराट् पङ्क्तिः ॥ स्वरः—१–५, ७, ८, १० धैवतः । ६, ९,
१ पञ्चमः ॥

॥ ६ ॥ प्र कारवो मनना वच्यमाना देवद्रीचीं नयत देवयन्तः । दक्षिणा-
ड्वाजिनी प्राच्येति हविर्भरन्त्यग्नये घृताची ॥ १ ॥ आ रोदसी अपृणा जाय-
न उत प्र रिक्था अध नु प्रयज्यो । दिवश्चिदग्ने महिना पृथिव्या वच्यन्तां ते वह्नयः
जिह्वाः ॥ २ ॥ द्यौश्च त्वा पृथिवी यज्ञियासो नि होतारं सादयन्ते दमाय । यदी
शो मानुषीर्देवयन्तीः प्रयस्वतीरीळते शुक्रमर्चिः ॥ ३ ॥ महान्त्सधस्थे ध्रुव आ
षत्तोऽन्तर्द्यावा माहिने हर्यमाणः । आस्क्रे सपत्नी अजरे अमृक्ते सबर्दुघे उरु-
यस्य धेनू ॥ ४ ॥ व्रता ते अग्ने महतो महानि तव क्रत्वा रोदसी आ ततन्थ ।
दूतो अभवो जायमानस्त्वं नेता वृषभ चर्षणीनाम् ॥ ५ ॥ २६ ॥ ऋतस्य वा
शिना योग्याभिर्घृतस्नुवा रोहिता धुरि धिष्व । अथा वह देवान्देव विश्वान्त्स्व-
रा कृणुहि जातवेदः ॥ ६ ॥ दिवश्चिदा ते रुचयन्त रोका उषो विभातीरनु
सि पूर्वीः । अपो यदग्न उशधग्वनेषु होतुर्मन्द्रस्य पनयन्त देवाः ॥ ७ ॥ उरौ वा
अन्तरिक्षे मदन्ति दिवो वा ये रोचने सन्ति देवाः । ऊमा वा ये सुहवासो
त्रा आयेमिरे रथ्यो अग्ने अश्वाः ॥ ८ ॥ ऐभिरग्ने सरथं याह्यर्वाङ् नाना-
वा विभवो ह्यश्वाः । पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमा वह मादयस्व
९ ॥ स होता यस्य रोदसी चिदुर्वी यज्ञंयज्ञमभि वृधे गृणीतः । प्राची अध्वरे-
तस्थतुः सुमेके ऋतावरी ऋतजातस्य सत्ये ॥ १० ॥ इळामग्ने पुरुदंसं सनिं
ः शश्वत्तमं हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमति-
त्वस्मे ॥ ११ ॥ २७ ॥ ८ ॥ २ ॥

॥ ७ ॥ १–११ विश्वामित्र ऋषिः ॥ अग्निर्देवता ॥ छन्दः—१, ६, ९, १०
ष्टुप् । २, ३, ४, ५, ७ निचृत्त्रिष्टुप् । ८ स्वराट् पङ्क्तिः । ११ भुरिक् पङ्क्तिः ॥
रः—१–७, ९, १० धैवतः । ८, ११ पञ्चमः ॥

॥ ७ ॥ प्र य आरुः शितिपृष्ठस्य धासेरा मातरा विविशुः सप्त वाणीः । परिक्षिता
तरा सं चरेते प्र सर्स्राते दीर्घमायुः प्रयक्षे ॥ १ ॥ दिवक्षसो धेनवो वृष्णो अश्वा दे-
रा तस्थौ मधुमद्वहन्तीः । ऋतस्य त्वा सदसि क्षेमयन्तं पर्येका चरति वर्तनिं गौः ॥ २ ॥
ा सीमरोहत्सुयमा भवन्तीः पतिश्चिकित्वान्रयिविद्रयीणाम् । प्र नीलपृष्ठो अत-

सस्यं धासेस्ता अवासयत्पुरुधप्रतीकः ॥ ३ ॥ मर्हि त्वाष्ट्रमूर्जयन्तीरजुर्यं स्तंभू
मानं वहतो वहन्ति । व्यङ्गेभिर्दिद्युतानः सधस्थ एकामिव रोदसी आ विवेश ॥ ४
जानन्ति वृष्णो अरुषस्य शेवमुत ब्रध्नस्य शासने रणन्ति । दिवोरुचः सुरु
रोचमाना इळा येषां गण्या माहिना गीः ॥ ५ ॥ १ ॥ उतो पितृभ्यां प्रविदा
घोषं महो महद्भ्यामनयन्त शूषम् । उक्षा ह यत्र परि धानमक्तोरनु स्वं धाम
रितुर्ववक्ष ॥ ६ ॥ अध्वर्युभिः पञ्चभिः सप्त विप्राः प्रियं रक्षन्ते निहितं पदं वेः
प्राञ्चो मदन्त्युक्षणो अजुर्या देवा देवानामनु हि व्रता गुः ॥ ७ ॥ दैव्या होता
प्रथमा न्यृञ्जे सप्त पृक्षासः स्वधया मदन्ति । ऋतं शंसन्त ऋतमित्त आहुरनु व्र
व्रतपा दीध्यानाः ॥ ८ ॥ वृषायन्ते महे अत्याय पूर्वीर्वृष्णे चित्राय रश्मयः
यामाः । देव होतर्मन्द्रतरश्चिकित्वान्महो देवान्रोदसी एह वक्षि ॥ ९ ॥ पृक्षप्रय
द्रविणः सुवाचः सुकेतव उषसो रेवदूषुः । उतो चिदग्ने महिना पृथिव्याः कृतं
देनः सं महे दशस्य ॥ १० ॥ इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमान
साध । स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ११ ॥ २ ॥

॥ ८ ॥ १–११ विश्वामित्र ऋषिः ॥ विश्वेदेवा देवता ॥ छन्दः–१,८,६,
निचृत्त्रिष्टुप् । २, ५, ६, ११ त्रिष्टुप् । ४ स्वराट् त्रिष्टुप् । ३, ७ स्वराडनुष्टुप्
स्वरः- १, २, ४–६, ८–११ धैवतः । ३, ७ गान्धारः ॥

॥ ८ ॥ अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन । यदूर्ध्वस्तिष्
द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे ॥ १ ॥ समिद्धस्य श्रयमाणः पुरस्
द्ब्रह्म वन्वानो अजरं सुवीरम् । आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौ
गाय ॥ २ ॥ उच्छ्रयस्व वनस्पते वर्ष्मन्पृथिव्या अधि । सुमिती मीयमानो व
धा यज्ञवाहसे ॥ ३ ॥ युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमान
तं धीरासः कवय उन्नयन्ति स्वाध्यो३ मनसा देवयन्तः ॥ ४ ॥ जातो जायते सु
नत्वे अह्नां समर्य आ विदथे वर्धमानः । पुनन्ति धीरा अपसो मनीषा देवया
प्र उदियर्ति वाचम् ॥ ५ ॥ ३ ॥ यान्वो नरो देवयन्तो निमिम्युर्वनस्पते स्वधि
र्वा ततक्ष । ते देवासः स्वरवस्तस्थिवांसः प्रजावदस्मे दिधिषन्तु रत्नम् ॥
ये वृक्णासो अधि क्षमि निमितासो यतस्रुचः । ते नो व्यन्तु वार्यं देवत्रा
साधसः ॥ ७ ॥ आदित्या रुद्रा वसवः सुनीथा द्यावाक्षामा पृथिवी अन्तरिक्ष
सजोषसो यज्ञमवन्तु देवा ऊर्ध्वं कृण्वन्त्वध्वरस्य केतुम् ॥ ८ ॥ हंसा इव श्रे

॥ १६३ ऋषिः–१—६ विवृहा काश्यपः ॥ देवता—यक्ष्मघ्नम् ॥ छन्दः–१, ६ अनुष्टुप् । २—५ निचृदनुष्टुप् ॥ गान्धारः स्वरः ॥

॥ १६३ ॥ अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि । यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ॥ १ ॥ ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् । यक्ष्मं दोषण्यं मंसाभ्यां बाहुभ्यां वि वृहामि ते ॥२॥ आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि । यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो वि वृहामि ते ॥३॥ ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् । यक्ष्मं श्रोणिभ्यां भासदाद्भंससो वि वृहामि ते ॥४॥ मेहनाद्वनंकरणाल्लोमभ्यस्ते नखेभ्यः । यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥५॥ अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ ६ ॥ २१ ॥

॥१६४॥ ऋषिः–१–५ प्रचेताः ॥ देवता–दुःस्वप्नघ्नम् ॥ छन्दः–१ निचृदनुष्टुप् । २ अनुष्टुप् । ४ विराडनुष्टुप् । ३ आर्चीभुरिक् त्रिष्टुप् । ५ पङ्क्तिः ॥ स्वरः–१, २, ४ गान्धारः । ३ धैवतः । ५ पञ्चमः ॥

॥ १६४ ॥ अपेहि मनसस्पतेऽप क्राम परश्चर । परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः ॥१॥ भद्रं वै वरं वृणते भद्रं युञ्जन्ति दक्षिणम् । भद्रं वैवस्वते चक्षुर्बहुत्रा जीवतो मनः ॥२॥ यदाशसा निःशसाभिशसोपारिम जाग्रतो यत्स्वपन्तः । अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद्दधातु ॥३॥ यदिन्द्र ब्रह्मणस्पतेऽभिद्रोहं चरामसि । प्रचेता न आङ्गिरसो द्विषतां पात्वंहसः ॥ ४ ॥ अजैष्माद्यासनाम चाभूमानागसो वयम् । जाग्रत्स्वप्नः संकल्पः पापो यं द्विष्मस्तं स ऋच्छतु यो नो द्वेष्टि तमृच्छतु ॥ ५ ॥२२॥

॥ १६५ ॥ ऋषिः—१—५ कपोतो नैर्ऋतः ॥ देवता—कपोतोपहतौ प्रायश्चित्तं वैश्वदेवम् ॥ छन्दः—१ स्वराट् त्रिष्टुप् । २, ३ निचृत्त्रिष्टुप् । ४ भुरिक् त्रिष्टुप् ५ त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ १६५ ॥ देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम । तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे ॥ १ ॥ शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहेषु । अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु ॥२॥ हेतिः पक्षिणी न दभात्यस्मानाष्ट्र्यां पदं कृणुते

अग्निधानें। शं नो गोभ्यंश्च पुरुषेभ्यश्चास्तु मा नों हिंसीदिह देवाः कपोतः ॥३॥ यदुलूको वदति मोघ मेतद्यत्कपोतः पदमग्नौ कृणोति। यस्य दूतः प्रहित एष एतत्तस्मै यमाय नमो अस्तु मृत्यवे ॥ ४ ॥ ऋचा कपोतं नुदत प्रणोदमिषं मदन्तः परि गां नयध्वम्। संयोपयन्तो दुरितानि विश्वा हित्वा न ऊर्ज प्र पतात्पतिष्ठः ॥ ५ ॥ २३ ॥

॥ १६६ ॥ ऋषिः—१—५ ऋषभो वैराजः शाकरोवा ॥ देवता—सपत्नघ्नम् ॥ छन्दः—१, २ अनुष्टुप्। ३, ४ निचृदनुष्टुप्। ५ महा पङ्क्तिः ॥ स्वरः–१–४ गान्धारः। ५ पञ्चमः ॥

॥ १६६ ॥ ऋषभं मा समानानां सपत्नानां विषासहिम्। हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ॥ १ ॥ अहमस्मि सपत्नहेन्द्र इवारिष्टो अक्षतः। अधः सपत्ना मे पदोरिमे सर्वे अभिष्ठिताः ॥ २ ॥ अत्रैव वोऽपि नह्याम्युभे आर्त्नी इव ज्यया। वाचस्पते नि षेधेमान्यथा मदधरं वदान् ॥ ३ ॥ अभिभूरहमागमं विश्वकर्मेण धाम्ना। आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे ॥ ४ ॥ योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीम्। अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव ॥ ५ ॥ २४ ॥

॥ १६७ ॥ ऋषिः–१–४ विश्वामित्रजमदग्नी ॥ देवता–१, २, ४ इन्द्रः। ३ लिङ्गोक्ताः ॥ छन्दः—१ आर्चीस्वराड् जगती। २, ४ विराड् जगती। ३ जगती ॥ निषादः स्वरः ॥

॥ १६७ ॥ तुभ्येदमिन्द्र परि षिच्यते मधु त्वं सुतस्य कलशस्य राजसि। त्वं रयिं पुरुवीरामु नस्कृधि त्वं तपः परितप्याजयः स्वः ॥ १ ॥ स्वर्जितं महि मन्दानमन्धसो हवामहे परि शक्रं सुताँ उप। इमं नो यज्ञमिह बोध्या गहि स्पृधो जयन्तं मघवानमीमहे ॥ २ ॥ सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि। तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ॥ ३ ॥ प्रसूतो भक्षमकरं चरावपि स्तोमं चेमं प्रथमः सूरिरुन्मृजे। सुते सातेन यद्यागमं वां प्रति विश्वामित्रजमदग्नी दमे ॥ ४ ॥ २५ ॥

॥ १६८ ॥ ऋषिः—१—४ अनिलो वातायनः ॥ वायुर्देवता ॥ छन्दः-१, ३ निचृत्त्रिष्टुप्। २, ४ त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ १६८ ॥ वात॑स्य॒ नु म॑हि॒मानं॒ रथ॑स्य रु॒जन्ने॑ति स्त॒नय॑न्नस्य॒ घोषः॑। दि॒विस्पृग्या॑त्यरु॒णानि॑ कृ॒ण्वन्नु॒तो ए॑ति पृथि॒व्या रे॒णुमस्य॑न् ॥ १ ॥ सम्प्रेर॑ते॒ अनु॒ वात॑स्य वि॒ष्ठा ऐनं॑ गच्छन्ति॒ सम॑नं॒ न योषाः॑। ताभिः॑ स॒युक्स॒रथं॑ दे॒व ई॑यते॒ऽस्य विश्व॑स्य॒ भुव॑नस्य॒ राजा॑ ॥२॥ अ॒न्तरि॑क्षे प॒थिभि॒रीय॑मानो॒ न नि वि॑शते कत॒मच्च॒नाहः॑। अ॒पां सखा॑ प्रथम॒जा ऋ॒ताव॒ा क्व॑ स्विज्जा॒तः कुत॒ आ ब॑भूव ॥३॥ आ॒त्मा दे॒वानां॒ भुव॑नस्य॒ गर्भो॑ यथाव॒शं च॑रति दे॒व ए॒षः। घोषा॒ इद॑स्य शृण्विरे॒ न रू॒पं तस्मै॒ वाता॑य ह॒विषा॑ विधेम ॥ ४ ॥ २६ ॥

॥ १६९ ॥ ऋषिः—१—४ शबरः काक्षीवतः ॥ गावो देवताः ॥ छन्दः–१ विराट् त्रिष्टुप्। २, ४ त्रिष्टुप्। ३ निचृत्त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ १६९ ॥ म॒यो॒भूर्वातो॑ अ॒भि वा॑तू॒स्रा ऊर्ज॑स्वती॒रोष॑धी॒रा रि॑शन्ताम्। पीव॑स्वतीर्जी॒वध॑न्याः पिबन्त्वव॒साय॑ प॒द्वते॑ रुद्र मृळ ॥ १ ॥ याः सरू॑पा॒ विरू॑पा॒ एक॑रूपा॒ यासा॑म॒ग्निरिष्ट्या॒ नामा॑नि॒ वेद॑। या अङ्गि॑रस॒स्तप॑से॒ह च॒क्रुस्ताभ्यः॑ पर्जन्य॒ महि॒ शर्म॑ यच्छ ॥ २ ॥ या दे॒वेषु॒ तन्व॒मैर॑यन्त॒ यासां॒ सोमो॒ विश्वा॑ रू॒पाणि॒ वेद॑। ता अ॒स्मभ्यं॒ पय॑सा॒ पिन्व॑मानाः प्र॒जाव॑तीरिन्द्र गो॒ष्ठे रि॑रीहि ॥ ३ ॥ प्र॒जाप॑ति॒र्मह्य॑मे॒ता ररा॑णो॒ विश्वै॑र्दे॒वैः पि॒तृभिः॑ संविदा॒नः। शि॒वाः स॒तीरुप॑ नो॒ गो॒ष्ठमाक॒स्तासां॑ व॒यं प्र॒जया॒ सं स॑देम ॥ ४ ॥ २७ ॥

॥ १७० ॥ ऋषिः—१-४ विभ्राट् सूर्यः ॥ सूर्यो देवता ॥ छन्दः—१, ३ विराड् जगती। २ जगती। ४ आस्तार पङ्क्तिः ॥ स्वरः—१-३ निषादः। ४ पञ्चमः ॥

॥ १७० ॥ वि॒भ्राड्बृ॒हत्पि॑बतु सो॒म्यं मध्वायु॒र्दध॑द्य॒ज्ञप॑ता॒ववि॑ह्रुतम्। वात॑जूतो॒ यो अ॑भि॒रक्ष॑ति॒ त्मना॑ प्र॒जाः पु॑पोष पुरु॒धा वि रा॑जति ॥ १ ॥ वि॒भ्राड्बृ॒हत्सुभृ॑तं वाज॒सात॑मं॒ धर्म॑न्दि॒वो ध॒रुणे॑ स॒त्यमर्पि॑तम्। अ॒मि॒त्र॒हा वृ॑त्र॒हा द॑स्यु॒हन्त॑मं॒ ज्योति॑र्जज्ञे असुर॒हा स॑पत्न॒हा ॥ २ ॥ इ॒दं श्रेष्ठं॒ ज्योति॑षां॒ ज्योति॑रुत्त॒मं वि॒श्व॒जिद्ध॑न॒जिदु॑च्यते बृ॒हत्। वि॒श्व॒भ्राड्भ्रा॒जो महि॒ सूर्यो॑ दृ॒श उ॒रु प॑प्रथे॒ सह॒ ओजो॒ अच्यु॑तम् ॥ ३ ॥ वि॒भ्राज॒ञ्ज्योति॑षा॒ स्व॒रग॑च्छो रोच॒नं दि॒वः। येने॒मा विश्वा॒ भुव॑ना॒न्याभृ॑ता वि॒श्वक॑र्मणा वि॒श्वदे॑व्यावता ॥ ४ ॥ २८ ॥

॥ १७१ ॥ ऋषिः—१-४ इटो भार्गवः ॥ इन्द्रो देवता ॥ छन्दः—१ निचृद् गायत्री । २, ४ विराड् गायत्री । ३ पादनिचृद् गायत्री ॥ षड्जः स्वरः ॥

॥ १७१ ॥ त्वं त्यमि॒टतो॒ रथ॒मिन्द्र॒ प्रावः॑ सु॒ताव॑तः । अशृ॑णोः सो॒मिनो॒ हव॑म् ॥ १ ॥ त्वं म॒खस्य॒ दोध॑तः॒ शिरोऽव॑ त्व॒चो भ॑रः । अग॑च्छः सो॒मिनो॑ गृ॒हम् ॥ २ ॥ त्वं त्यमि॑न्द्र॒ मर्त्य॑मास्त्रबु॒ध्नाय॑ वे॒न्यम् । मुहुः॑ श्रथ्ना म॒नस्य॑वे ॥ ३ ॥ त्वं त्यमि॑न्द्र॒ सूर्यं॑ प॒श्चा सन्तं॑ पु॒रस्कृ॑धि । दे॒वानां॑ चित्ति॒रो वश॑म् ॥ ४ ॥ २९ ॥

॥ १७२ ॥ ऋषिः—१—४ संवर्तः ॥ उषा देवताः ॥ छन्दः—पिपीलिकामध्यागायत्री ॥ षड्जः स्वरः ॥

॥ १७२ ॥ आ या॑हि॒ वन॑सा स॒ह गावः॑ सचन्त वर्त॒निं यदूध॑भिः ॥ १ ॥ आ या॑हि॒ वस्व्या॑ धि॒या मंहि॑ष्ठो जार॒यन्म॑खः सु॒दानु॑भिः ॥ २ ॥ पि॒तु॒भृतो॒ न तन्तु॒मित्सु॒दान॑वः॒ प्रति॑ दध्मो॒ यजा॑मसि ॥ ३ ॥ उ॒षा अप॒ स्वसु॒स्तमः॒ सं व॑र्तयति वर्त॒निं सु॑जा॒तता॑ ॥ ४ ॥ ३० ॥

॥ १७३ ॥ ऋषि :—१—६ ध्रुवः ॥ देवता—राज्ञःस्तुतिः ॥ छन्दः—१, ३—५ अनुष्टुप् । २ भुरिगनुष्टुप् । ६ निचृदनुष्टुप् ॥ गान्धारः स्वरः ॥

॥ १७३ ॥ आ त्वा॑हार्षम॒न्तरे॑धि ध्रु॒वस्ति॒ष्ठावि॑चाचलिः । विश॑स्त्वा॒ सर्वा॑ वाञ्छन्तु॒ मा त्वद्रा॒ष्ट्रमधि॑ भ्रशत् ॥ १ ॥ इ॒हैवैधि॒ माप॑ च्योष्ठाः॒ पर्व॑त इ॒वावि॑चाचलिः । इन्द्र॑ इ॒वेह ध्रु॒वस्ति॑ष्ठे॒ह रा॒ष्ट्रमु॑ धारय ॥ २ ॥ इ॒ममिन्द्रो॑ अदीधरद्ध्रु॒वं ध्रु॒वेण॑ ह॒विषा॑ । तस्मै॒ सोमो॒ अधि॑ ब्रव॒त्तस्मा॑ उ॒ ब्रह्म॑ण॒स्पतिः॑ ॥ ३ ॥ ध्रु॒वा द्यौर्ध्रु॒वा पृ॑थि॒वी ध्रु॒वासः॒ पर्व॑ता इ॒मे । ध्रु॒वं विश्व॑मि॒दं जग॑द्ध्रु॒वो राजा॑ वि॒शाम॒यम् ॥ ४ ॥ ध्रु॒वं ते॒ राजा॒ वरु॑णो ध्रु॒वं दे॒वो बृह॒स्पतिः॑ । ध्रु॒वं त॒ इन्द्र॑श्चा॒ग्निश्च॑ रा॒ष्ट्रं धा॑रयतां ध्रु॒वम् ॥ ५ ॥ ध्रु॒वं ध्रु॒वेण॑ ह॒विषा॒भि सोमं॑ मृशामसि । अथो॑ त॒ इन्द्रः॒ केव॑ली॒र्विशो॑ बलि॒हृत॑स्करत् ॥ ६ ॥ ३१ ॥

॥१७४॥ ऋषिः—१— ५ अभीवर्तः ॥ देवता—राज्ञः स्तुतिः ॥ छन्दः—१, ५ निचृदनुष्टुप् । २, ३ विराडनुष्टुप् । ४ पादनिचृदनुष्टुप् ॥ गान्धारः स्वरः ॥

॥ १७४ ॥ अ॒भी॒व॒र्तेन॑ ह॒विषा॒ येनेन्द्रो॑ अभिवावृ॒ते । तेना॒स्मान्ब्र॑ह्मणस्पते॒ऽभि रा॒ष्ट्राय॑ वर्तय ॥ १ ॥ अ॒भि॒वृत्य॑ स॒पत्ना॑न॒भि या॒ नो॒ अरा॑तयः । अ॒भि पृ॑त-

न्यन्तं तिष्ठाभि यो नं इरस्यतिं ॥ २ ॥ अभि त्वां देवः संवि॒ताभि सोमों
वीवृतत् । अभि त्वा विश्वां भूतान्यभीवर्तो यथासंसि ॥ ३ ॥ येनेन्द्रों ह॒वि
कृत्व्यभंवद्युम्न्युत्तमः । इदं तदंक्रि देवा असपत्नः किलाभुवम् ॥ ४ ॥ अ
पत्नः संपत्नहाभिराष्ट्रो विषासहिः । यथाहमेषां भूतानां विराजांनि जनं
च ॥ ५ ॥ ३२ ॥

॥ १७५ ॥ ऋषिः-१-४ऊर्ध्वग्रावार्बुदिः ॥ ग्रावाणो देवताः॥ छन्दः-
१, २, ४ गायत्री । ३ विराड् गायत्री ॥ षड्जः स्वरः ॥

॥ १७५ ॥ प्र वों ग्रावाणः सवि॒ता देवः सुंवतु धर्मंणा । धूर्षु युंज्य
सुनुत ॥ १ ॥ ग्रावांणो अपं दुच्छुनामपं सेधत दुर्मतिम् । उस्राः कर्तन भेषज
॥ २ ॥ ग्रावांण उपंरेष्वा महीयन्ते सजोषंसः । वृष्णे दधंतो वृष्ण्यंम् ॥३॥
वाणः सवि॒ता नु वों देवः सुंवतु धर्मंणा । यजमानाय सुन्वते ॥ ४ ॥ ३३ ॥

॥ १७६ ॥ ऋषिः—१—४ सूनुरार्भवः ॥ देवता—१ ऋभवः । २—
अग्निः ॥ छन्दः—१, ४ विराडनुष्टुप् । ३ अनुष्टुप् । २ निचृद्गायत्री ॥ स्वरः—
३, ४ गान्धारः । २ षड्जः ॥

॥ १७६ ॥ प्र सूनवं ऋभूणां बृहन्नंवन्त वृजनां । क्षामा ये विश्वधांयसे
श्नंन्धेनुं न मातरंम् ॥ १ ॥ प्र देवं देव्या धिया भरंता जातवेंदसम् । हव्या
वक्षदानुषक् ॥ २ ॥ अयमुष्य प्र देवयुर्होतां यज्ञायं नीयते । रथो न योर
तो घृणींवाञ्चेताति त्मनां ॥ ३ ॥ अयमग्निरुरुष्यत्यमृतांदिव जन्मंनः । सहंसा
त्सहीयान्देवो जीवातंवे कृतः ॥ ४ ॥ ३४ ॥

॥ १७७ ॥ ऋषिः—१—३ पतङ्गः प्राजापत्यः ॥ देवता—मायाभेद
छन्दः—१ जगती । २ विराट् त्रिष्टुप् । ३ निचृत्त्रिष्टुप् ॥ स्वरः—१ निषा
२, ३ धैवतः ॥

॥ १७७ ॥ पतङ्गमक्तमसुंरस्य मायया हृदा पंश्यन्ति मनंसा विपश्चितः
मुद्रे अन्तः कवयो वि चंक्षते मरींचीनां पदमिंच्छन्ति वेधसः ॥ १ ॥ पतङ्गो
चं मनंसा बिभर्ति तां गन्धर्वोऽवदद्गर्भें अन्तः । तां द्योतंमानां स्वर्यं मनीषामृ
पदे कवयो नि पांन्ति ॥२॥ अपंश्यं गोपामनिंपद्यमानमा च परां च पथिभि
रंन्तम् । स सध्रीचीः स विषूचीर्वसांन आ वरीवर्ति भुवंनेष्वन्तः ॥ ३ ॥ ३५

॥ १७८ ॥ ऋषिः—१—३ अरिष्टनेमिस्तार्क्ष्यः ॥ देवता—तार्क्ष्यः ॥
–१ विराट् त्रिष्टुप्। २ निचृत्त्रिष्टुप्। ३ त्रिष्टुप्॥ धैवतः स्वरः॥

॥ १७८ ॥ त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम्। अरिष्टनेमिं
जमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम॥१॥ इन्द्रस्येव रातिमाजोहुवानाः स्वस्तये
मेवा रुहेम। उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषाम॥२॥ सद्य-
यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान। सहस्रसाः शतसा अ-
र्हिनं स्मा वरन्ते युवतिं न शर्याम्॥ ३॥ ३६॥

॥ १७९ ॥ ऋषिः—१ शिविरौशीनरः। २ प्रतर्दनः काशिराजः। ३ वसुम-
हिदश्वः॥ इन्द्रो देवता॥ छन्दः—१ निचृदनुष्टुप्। २ निचृत्त्रिष्टुप्। ३
टुप्॥ स्वरः—१ गान्धारः। २, ३ धैवतः॥

॥ १७९ ॥ उत्तिष्ठताव पश्यतेन्द्रस्य भागमृत्वियम्। यदि श्रातो जुहोतन
ातो ममत्तन॥ १॥ श्रातं हविरो ष्विन्द्र प्र याहि जगाम सूरो अध्वनो वि-
म्। परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम्॥२॥ श्रा-
न्य ऊधनि श्रातमग्नौ सुश्रातं मन्ये तदृतं नवीयः। माध्यन्दिनस्य सवनस्य
ः पिबेन्द्र वज्रिन्पुरुकृज्जुषाणः॥ ३॥ ३७॥

॥ १८० ॥ ऋषिः—१—३ जयः ॥ इन्द्रो देवता ॥ छन्दः—१, २
प्। ३ विराट् त्रिष्टुप्॥ धैवतः स्वरः॥

॥१८०॥ प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्रा भर
णेना वसूनि पतिः सिन्धूनामसि रेवतीनाम्॥१॥ मृगो न भीमः कुचरो गि-
ः परावत आ जगन्था परस्याः। सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ता
वि मृधो नुदस्व॥ २॥ इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम्।
नुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम्॥ ३॥ ३८॥

॥१८१॥ ऋषिः—१ प्रथो वासिष्ठः। २ सप्रथो भारद्वाजः॥ ३ घर्मः सौर्यः॥
देवा देवताः॥ छन्दः—१ निचृत्त्रिष्टुप्। २ त्रिष्टुप्। ३ पादनिचृत्त्रिष्टुप्॥
स्वरः॥

॥ १८१ ॥ प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत् । धातु
र्द्युतानात्सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः ॥ १ ॥ अविन्दन्ते अति
हितं यदासीद्यज्ञस्य धाम परमं गुहा यत् । धातुर्द्युतानात्सवितुश्च विष्णोर्भरद्वाजो
बृहदा चक्रे अग्नेः ॥२॥ तेऽविन्दन्मनसा दीध्याना यजुः ष्कन्नं प्रथमं देवयानम्
धातुर्द्युतानात्सवितुश्च विष्णोरा सूर्यादभरन्घर्ममेते ॥ ३ ॥ ३९ ॥

॥ १८२ ॥ ऋषिः—१—३ तपुर्मूर्धा बार्हस्पत्यः ॥ बृहस्पतिर्देवता ॥ छन्दः—
भुरिक् त्रिष्टुप् । २ विराट् त्रिष्टुप् । ३ त्रिष्टुप् ॥ धैवतः स्वरः ॥

॥ १८२ ॥ बृहस्पतिर्नयतु दुर्गहा तिरः पुनर्नेषदघशंसाय मन्म । क्षिपदश
स्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ १ ॥ नराशंसो नोऽवतु प्रयाजे
नो अस्त्वनुयाजो हवेषु । क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं यो
॥ २ ॥ तपुर्मूर्धा तपतु रक्षसो ये ब्रह्मद्विषः शरवे हन्तवा उ । क्षिपदशस्तिमप दु
र्मतिं हन्नथा करद्यजमानाय शं योः ॥ ३ ॥ ४० ॥

॥ १८३ ॥ ऋषिः—१—३ प्रजावान्प्राजापत्यः ॥ अन्वृचं यजमानपत्नी
होत्राशिषो देवताः ॥ छन्दः—१ त्रिष्टुप् । २, ३ विराट् त्रिष्टुप् ॥ धैवतः स्वरः

॥ १८३ ॥ अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् । इ
प्रजामिह रयिं रराणः प्र जायस्व प्रजया पुत्रकाम ॥ १ ॥ अपश्यं त्वा मनसा
दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम् । उप मामुच्चा युवतिर्बभूयाः प्र जायस्व
जया पुत्रकामे ॥ २ ॥ अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः । अहं प्र
अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥ ३ ॥ ४१ ॥

॥ १८४ ॥ ऋषिः—१—३ त्वष्टा गर्भकर्ता विष्णुर्वा प्राजापत्यः
देवता—लिङ्गोक्ताः । गर्भार्थाशीः ॥ छन्दः—१, २ अनुष्टुप् । ३ निचृदनुष्टुप्
गान्धारः स्वरः ॥

॥ १८४ ॥ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आ सिञ्चतु
जापतिर्धाता गर्भं दधातु ते ॥ १ ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति
गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥ २ ॥ हिरण्ययी अरणी यं निर्मन्थ
अश्विना । तं ते गर्भं हवामहे दशमे मासि सूतवे ॥ ३ ॥ ४२ ॥

।१८५।। ऋषिः–१–३ सत्यधृतिर्वारुणिः।। देवता–अदितिः। स्वस्त्ययनम्।।
-१, ३ विराड् गायत्री । २ निचृद्गायत्री ।। षड्जः स्वरः ।।

।। १८५ ।। महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य
।। नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशंसः ।। २ ।। यस्मै पु
अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ।। ३ ।। ४३ ।।

।।१८६।। ऋषिः–१–३ उलो वातायनः।। वायुर्देवता।। छन्दः–१,२ गायत्री ।
निचृद्गायत्री ।। षड्जः स्वरः ।।

।। १८६ वात आ वातु भेषजं शम्भु मयोभु नो हृदे। प्र ण आयूंषि तारिषत्
उत वात पितासि न उत भ्रातोत नः सखा । स नो जीवातवे कृधि ।।२।।
वात ते गृहेऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे ।। ३ ।। ४४ ।।

।।१८७।। ऋषिः–१–५ वत्स आग्नेयः।। अग्निर्देवता ।। छन्दः–१ निचृद्-
। २–५ गायत्री ।। षड्जः स्वरः ।।

।। १८७ ।। प्राग्नये वाचमीरय वृषभाय क्षितीनाम् । स नः पर्षदति द्विषः
।। यः परस्याः परावतस्तिरो धन्वातिरोचते । स नः पर्षदति द्विषः ।।२।।
क्षांसि निजूर्वति वृषा शुक्रेण शोचिषा । स नः पर्षदति द्विषः ।। ३ ।। यो
भि विपश्यति भुवना सं च पश्यति । स नः पर्षदति द्विषः ।। ४ ।। यो
पारे रजसः शुक्रो अग्निरजायत । स नः पर्षदति द्विषः ।। ५ ।। ४५ ।।

।।१८८।। ऋषिः–१–३ श्येन आग्नेयः ।। देवता–अग्निर्जातवेदाः।। गायत्री
।। षड्जः स्वरः ।।

।। १८८ ।। प्र नूनं जातवेदसमश्वं हिनोत वाजिनम् । इदं नो बर्हिरासदे
।। अस्य प्र जातवेदसो विप्रवीरस्य मीळ्हुषः । महीमियर्मि सुष्टुतिम् ।। २ ।।
चो जातवेदसो देवत्रा हव्यवाहनीः । ताभिर्नो यज्ञमिन्वतु ।। ३ ।। ४६ ।।
।।१८९।। ऋषिः–१–३ सार्पराज्ञी।। देवता–सार्पराज्ञी सूर्यो वा ।। छन्दः–१
गायत्री । २ विराड् गायत्री । ३ गायत्री।। षड्जः स्वरः ।।

॥ १८९ ॥ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः
॥ १ ॥ अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ २
त्रिंशद्धाम वि राजति वाक्पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः ॥ ३ ॥ ४७

॥ १९० ॥ ऋषिः–१–३ अघमर्षणो माधुच्छन्दसः ॥ देवता–भाववृत्तम्
छन्दः–१ विराडनुष्टुप् । २ अनुष्टुप् । ३ पादनिचृदनुष्टुप् ॥ गान्धारः स्वरः

॥ १९० ॥ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत तत
समुद्रो अर्णवः ॥ १ ॥ समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि
विदधद्विश्वस्य मिषतो वशी ॥ २ ॥ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दि
च पृथिवीं चान्तरिक्षमथो स्वः ॥ ३ ॥ ४८ ॥

॥ १९१ ॥ ऋषिः–१–४ संवननः ॥ देवता–१ अग्निः । २–४ संज्ञानम्
छन्दः–१ विराडनुष्टुप् । २ अनुष्टुप् । ४ निचृदनुष्टुप् । ३ त्रिष्टुप् ॥ स्वरः–
२,४ गान्धारः । ३ धैवतः ॥

॥ १९१ ॥ संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इळस्पदे समिध्यसे
नो वसून्या भर ॥ १ ॥ सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् । देवा भा
यथा पूर्वे सञ्जानाना उपासते ॥ २ ॥ समानो मन्त्रः समितिः समानी समा
मनः सह चित्तमेषाम् । समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि
॥ ३ ॥ समानी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा व
सुसहासति ॥ ४ ॥ ४९ ॥ ८ ॥ ८ ॥ १२ ॥ १० ॥

॥ इति दशमम्मण्डलं समाप्तम् ॥

॥ ऋग्वेदसंहिता समाप्ता ॥

